जसिद्धान्त.' इति सुप्रसिद्ध । रामानुजसिद्धान्तः बहुभि. आचार्यैः बहुप्रकारैः निरूपितः। घण्टावतारभूतैः कवितार्किकसिंहैः वेदान्तदेशिकैः न्यायसिद्धाञ्जने सुष्टुप्रतिपादितः रामानुजसिद्धान्तः। न्यायसिद्धाञ्जने वेदान्तदेशिकैः सुनिरूपितं यत् तत् दुर्ग्रहमिति मन्यमानानाम् इय कृतिः 'रामानुजसिद्धान्तसंग्रहः 'इति अस्य ग्रथस्य कर्त्रा चण्डमारुत श्रीनिवासराघवाचार्येण स्वयमुक्तम्—

न्यायसि द्धाञ्जने सर्वमाचार्यैस्सुनिरूपितम्।
तत्रापि मन्यमानानां दुर्ग्रहत्वमिय कृतिः। इति।

द्रव्याद्रव्यभेदेन परपक्षप्रतिक्षेपपूर्वकं तत्त्वयाथार्थ्यरूपणं मया क्रियते इति श्रीनिवासराघवाचार्यै. उक्तम्। किमर्थमित्युक्ते? द्रव्यादिनिखिलपदार्थनिरूपणस्यापि परंपरया मोक्षसाधनत्वात् इत्युक्त्वा, जीवेश्वरतत्त्वयाथार्थ्यज्ञानपूर्वकपरमात्मोपासनस्य मोक्षहेतुत्व शास्त्रेषु शिष्टमिति वेदार्थसंग्रहवाक्यं प्रमाणत्वेन प्रदर्शितवान् 'जीवपरयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनप्रणामादिः अत्यर्थप्रियः तत्प्राप्तिफलः' इति।

तत्त्वयाथार्थ्यरूपणमस्तु। किमर्थ परपक्षप्रतिक्षेपः क्रियत इत्युक्ते? केचित् ब्रह्मव्यतिरिक्त जीवात्मानं नेच्छन्ति। इतरे तु इच्छन्तोऽपि मुक्तौ स्वतंत्र वदन्ति. परे त देहमेवात्मानमभ्यु-

पगच्छन्ति। अन्ये तु देहातिरिक्तमपि अकर्तारमाहुः। कतिचित् देहेन सहोत्पत्तिविनाशयोगिन मन्यन्ते। इतरे तु आगन्तुकंज्ञान-जनक मोक्षदशायां पाषाणकल्पनं जडंचाहुः। अतः परपक्षप्रति-क्षेपपूर्वकं तत्त्वयाथार्थ्यरूपणं क्रियते इति चोक्तम्।

अस्मिन् 'रामानुजसिद्धान्तसंग्रहे प्रथमे प्रकृतिपरिच्छेदे तत्त्वविभागः उपादानलक्षणं, धर्मधर्म्यभेदखण्डनं, अणुकारण-त्वभङ्गः, त्रिगुणसृष्टिक्रमः, इन्द्रियलक्षणम्, तन्मात्रनिरूपणं, आकाशोत्पत्तिप्रतिपादनम्, नीलपटन्यायनिरूपणम्, वायुलक्षणं, तेजोलक्षणं, जललक्षणं, पृथिवीलक्षणं, तमसः द्रव्यत्वनिरूपणम्, कालनिरूपण, समष्टिव्यष्टिनिरूपणं कारणातिरिक्तकार्यनिरासः, शरीरलक्षणम् इत्यादयः विषयाः उक्ताः।

द्वितीये जीवपरिच्छेदे जीवात्मनः लक्षणं, तस्याणुत्व-समर्थनं, जीवविभागः, उपासनात्रैविध्यं, ज्ञानस्य द्रव्यत्वं, मुक्तस्य दुःखासंबंधः, आनंदतारतम्यनिरासः, इत्यादयः विषयाः उक्ताः।

तृतीये ईश्वरपरिच्छेदे ब्रह्मशब्दार्थः, निर्विशेषत्वनिरासः, अभिन्ननिमित्तत्वसमथनम्, अशरीरशब्दार्थः, 'अनेन जीवेनात्मना ऽनुप्रविश्येत्यस्यार्थः, ईश्वरानुमाननिरासः, वेदस्यपौरुषेयत्वनि-

रासः, लक्ष्मीतत्त्वशोधनं, नित्यविभूतिनिरूपणम् इत्यादयः विषयाः उक्ताः ।

अस्मिन् ग्रंथे श्रुतिस्मृतीतिहासपुराणप्रमाणवचनैः सह श्रीभाष्य, वेदार्थसंग्रह, तंत्रवार्तिक, शतदूषणी इत्यादिग्रंथेभ्यः बहूनि प्रमाणानि दत्तानि। उदाहृतग्रंथसूची अन्तिमे दत्ता ।

कवितार्किकसिंहानां वेदान्तदेशिकानां सुप्रसिद्धस्य 'शत-दूषणी' ग्रथस्य महाचार्या इति प्रसिद्धाः दोड्डयाचार्याः 'चण्ड मारुत' इति व्याख्यां लिखितवन्तः। तस्य ग्रंथस्य नाम एव संज्ञा अस्य ग्रन्थस्य कर्तुः श्रीनिवासराघवाचार्यस्य।

श्रीनिवासराघवाचार्याणां पितृपादाः कृष्णसूरिः अथवा कृष्णदेशिकाः । श्रीकृष्णदेशिकैः 'नित्यानुष्ठानदीपिका' इति ग्रंथः लिखितः।

श्रीनिवासराघवाचार्यैं स्मरणमात्रेणात्यन्तधन्यतापादक-तया कीर्तिताः आचार्याः महात्मान ज्ञानानुष्ठानवैराग्यैर्विल-क्षणाः श्रीवण् शठकोपश्रीरङ्गनाथयतीन्द्रमहादेशिका । एते अहोबिलमठास्थाने षड्विंशपट्टे मूर्धाभिषिक्ता । पवित्रनाम्न श्रीवण् शठकोपश्रीश्रीनिवासयतीन्द्रमहादेशिकस्य पूर्वाश्रमकुमारा।

महीशूरमहाराजेन श्रीकृष्णराजकण्ठीरवसार्वभौमेण बहु-भक्त्या आराधिता। रङ्गनाथपुरनाम्नोऽग्रहारस्य प्रतिष्ठापका। एतेषां तनियन्—

'श्रीवीरराघवयतीन्द्रपराङ्कुशादि
रामानुजार्यकमलानिधियोगिवर्यैः।
संप्रेक्षितं करुणया परिपूर्णबोधं
श्रीरगनाथयतिशेखरमाश्रयामः॥ इति।

प्राचीनप्रति सज्जीकृत्य यावन्मति समग्रं सावधा-नमधीत्य क्रमबद्धतया संकलय्य अध्यायक्रमेण पाठसंपादन कृतम्। पण्डिता युक्तायुक्ततत्त्वनिर्धारणे प्रमाणम्।

अस्य ग्रथस्य प्रकाशनाय द्रव्यसाहाय्य कृतवद्भ्य। ति. ति. दे. कार्यनिर्वहणाधिकारिभ्यः श्री यम्. वि. यस्. प्रसाद् महाशयेभ्य कार्तज्ञ्यमाविष्करोमि।

पुस्तकमुद्रणे साहाय्यं दत्तवते श्री सत्यसायि प्रिटर्स अधिपाय डि. यस्. पि. रामकृष्णाय च धन्यवादाः।

दासः
विजयराघवाचार्यः

# विषयानुक्रमः

ॐ

*श्रीमते रामानुजाय नम*

*श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः*

# श्रीमद्रामानुजसिद्धान्तसंग्रहः

मंगलाचरणम् :

यस्याभवद्भक्तजनार्तिहन्तु .
पितृत्वमन्येष्वविचार्य तूर्णम् ।
स्तंभेऽवतारस्तमनन्य लभ्य
लक्ष्मीनृसिंहं शरणं प्रपद्ये ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

प्रपद्ये निरवद्यानां निषद्यां गुणसंपदाम् ।
शरण भव भीतानां शठकोपमुनीश्वरम् ॥

श्री वीरराघवयतीन्द्रपराङ्कुशादि
रामानुजार्यकमलनिधियोगिवर्यैः .
सप्रेक्षितं करुणया परिपूर्णबोध
श्रीरंगनाथ यतिशेखरमाश्रयाम ॥

श्रीमते श्रीवणशठकोप श्रीरंगनाथ यतीन्द्र महादेशिकाय नमः

बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम् ।
येनाव्याहतसंकल्प वस्तुलक्ष्मीधरं विदु ।। (1)

वरद द्विरदाद्रीशं श्रीनिधिं करुणानिधिम् ।
शरण्यं शरण यामि प्रणतार्ति हर हरिम् ।। (2)

श्रीमानेव शरण्य इत्यनुपदं जोघुष्यतेऽनु श्रीवस्मृ
त्याचार्यं परं परोक्तिभिरथाप्येतद्रभिन्नेस्वयम् ।
अङ्के पङ्कजवासिनी स्वसदृशी बिभ्रज्जगद्रक्षणा
लं कर्मणि विहार भेद रसिको जीयान्नृकण्ठीरव ।। (3)

जनी जगतां पत्युरधिगम्य त्वकारिणीम् ।
ज्ञातनिग्रहान्नौमि जगद्रक्षणदीक्षिताम् (4)

आरामारमणाद्राशी रगनाथ गुरूत्तमात् ।
गुरुपारपरी वन्दे करुणामिव रूपिणीम् ।। (5)

श्रीकृष्णसूरिचरणौ शरणं संश्रये परम् ।
यत्सेवया परत्रेव समृद्धिरिहपुष्कला ।। (6)

यद्वाग्झरीभिर्वा देदात् श्रीनिवासमहामुनिः ।
चण्डमारुतमज्ञा हि यस्मै न पितरं श्रये ।। (7)

ग्रन्थप्रयोजनम् .

श्रीवासराघवेनाद्य क्रियते विदुपाम्मुदे ।
रामानुजार्यसिद्धान्त सग्रहस्साधुसत्मत . ।। (8)

न्यायसिद्धाञ्जने सर्वमाचार्यैस्सुनिरूपितम्।
तत्रापि मन्यमानानां दुर्ग्रहत्वमियं कृतिः ।। [9]

द्रव्याद्रव्यविभेदेन तत्त्वयाथार्थ्यरूपणम्।
परपक्षप्रतिक्षेपपूर्वक क्रियते मया ।। [10]

ननु अपवर्गसिद्धौ यदपेक्षित तदेव विशदं तदर्थिभि. ज्ञातव्यम्। तावदेव शिष्यादिभ्योऽपि प्रवर्तितव्यम्। किमन्यै अनपेक्षितैः दव्याद्रव्यादिभि इह कीर्त्या मानैरिति चेन्न।

द्रव्यादिनिखिलपदार्थनिरूपणस्यापि परंपरया मोक्षसाधन-त्वात्। तथा हि जीवेश्वरतत्त्वयाथार्थ्यज्ञानपूर्वकपरमात्मोपास-नस्य मोक्षहेतुत्वं शास्त्रेषु शिष्टम्। अयमर्थ. श्री वेदार्थसंग्रहे 'जीवपरमाथात्म्यज्ञानपूर्वक' इत्यादिनान्वग्राहि। तच्च ज्ञान तत्त-त्प्रकारै· तत्तत्पदार्थाविगनो सत्यग्मेव सभवति। अत तन्निरूपण-मावश्यकम्। तर्हि परपक्षप्रतिक्षेप किमर्थं क्रियत इति चेन्न। असति परपक्षप्रतिक्षेपे तत्तद्वादिभिः भ्रान्तिकल्पिता· ते ते पदार्था· परस्परविरुद्धानेकप्रकारा स्वयाथात्म्ये बोधो परोधं जनयेयुः। यथा केचित् ब्रह्मव्यगतिरिक्तं जीवात्मान नैच्छन्ति। इतरे तु इच्छन्तोऽपि मुक्तौ स्वतत्र वदन्ति। परे तु देहमेवात्मानमभ्युप-गच्छन्ति।

देहातिरिक्तमपि अकर्तारमन्येत्वाहु। देहेन सहोत्पत्तिविना-शयोगिन कतिचिन्मन्यन्ते। इतरे तु आगन्तुकज्ञानजनकं मोक्षदशायां

पाषाणकल्पनं जडं चाहुः। एतेषां पक्षाणां निर्मूलत्वाद्य निरूपणे ब्रह्मव्याप्तिरिक्तपरतंत्रदेहविलक्षणपराधीनकतृत्वभोक्तृत्वविशिष्ट-नित्ययावदात्मभाविज्ञानादिगुणकाणुस्वप्रकाशानादिकर्मप्रवाहजनि-तज्ञानसंकोचक यादृच्छिकसुकृतविशेषपरिगृहीतस्वाधिकारानुगुणों-पायानुष्ठान संक्षीणाशेषदोषाविर्भूत स्वाभाविापहतपाप्मत्वादि-गुणाष्टकविशिष्ठजीवस्वरूपयथात्म्यज्ञान न सेत्स्यति। एव तत्वा-न्तरेष्विति भाव्यम्।

अतः परपक्षप्रतिक्षेपपूर्वकमेव परावरतत्वनिरूपणमावश्यक-मिति तदेव निरूप्यते। तथा हि द्रव्याद्रव्यविभेदेन द्विविधं तत्वम्। उपादानलक्षणम् :

तत्र उपादान द्रव्यम्। अवस्थाश्रयमुपादानम्। अवस्था चाग-न्तुकापृथकिसद्ध धर्मविशेषः।

श्लो ॥ आगन्तुकापृथक्सिद्ध
धर्मोऽवस्थेति कीर्त्यते॥ [तं. वा.] इति प्रमाणात्। नित्येष्वपि द्रव्येष्वन्ततस्संयोगरूपावस्थाया सत्वाल्लक्षणसमन्वय । न च नित्यमुक्तेश्वरज्ञानेषु सकोचादिरूपावस्थाया अभावदव्या-प्तिरिति वाच्यम्। तत्रापि आगन्तुकतत्तद्विषयसंबंधस्य सयोगात्म-कस्यावस्थाविशेषस्य सत्त्वात्।

न च ज्ञानस्याद्रव्यत्वात्तस्य विषयैस्सह संयोग दुर्लभ इति शंक्यम्। ज्ञाने द्रव्यत्वस्य समर्थयिष्यमाणत्वात्। अत एव

श्रीभाष्ये 'ज्ञानञ्च द्रव्यमेव। तस्य विषयैस्सह सयोग: संबंध.' इत्युपपादितम्।

द्रव्यविभाग: साधर्म्यलक्षणकथन च

अवस्थाश्रय द्रव्यम्। अवस्थाशून्यम् अद्रव्यम्। तच्च निरूपयिष्यते। प्रत्यक्षादिसिद्धोऽयं द्रव्याद्रव्यविभाग न चान्यतरत्याग शक्य। शब्दस्पर्शरूपरसगधाना तद्वत्ता च अबाधितानन्यथासिद्धभेदप्रतीते.। रूपस्पर्शनियताभ्यां चक्षुस्त्वग्भ्या दृष्टमेव स्पृशामीति दृढतरप्रत्यभिज्ञया रूपस्पर्शातिरिक्त द्वीन्द्रियग्राह्यवस्तुसिद्धेः। न च रूपादे प्रत्येकमेकैकेन्द्रियग्राह्यत्वेऽपि। संहतौ द्वीन्द्रियग्राह्यत्वं स्यादिति वाच्यम्। ग्राह्यसपातेऽपि ग्राहकाना चक्षुरादीना ग्राह्यनियमपरित्यागानौचित्यात्। अन्यथा कन्धानन्धादि व्यवस्था न स्यात्।

अन्धस्य चक्षुरिन्द्रियाभावेऽपि त्वचा सहतरूपग्रहणसंभवात्। असंहतरूपस्य त्वन्मते असभवात्। स्पर्शस्वभाव वायुपरमाणु:। स्पर्शरूपस्वभाव तेज परमाणु:। स्पर्शरूपरसस्वभाव. जलपरमाणु: स्पर्शरूपरसगधस्वभाव पृथिवीपरमाणु इति हि त्वत्सिद्धान्त। सहन्यमानरूपाद्यतिरिक्तकालदेशानभ्युपगन्तु: तव संघातभावोऽपि दुरुपपाद। भिन्नदेशभिन्नकालवृत्तीनां वस्तूनम् एककालावच्छेदेन एकदेशवृत्तित्वमेव हि सघात। अत द्वीन्द्रियग्राह्य रूपस्पर्शाद्याश्रय वस्तु स्वीकर्तव्यम्। एव विशदाविशदधीर्जायते। तन्न स्यात्। दूरे दृष्ट्वा समीपगतस्य विशदधीर्जायते। समीपे दृष्टवा दूर गतस्याविशदधी। आद्या भूयो धर्मविशिष्टवस्तुग्रहणरूपा। द्वितीया

कतिपयधर्मविशिष्टवस्तुग्रहणरूपा। उभयोरपि धर्मधर्म्युभयालंबन-सापेक्षत्वात्। एव संशयोऽपि न स्यात्। साधारणाकारेण वस्तु-ग्रहणे विरुद्धकोटिद्वयस्मरणे च संशयोत्पत्ते। तथा भ्रम, तन्नि-वृत्ती न स्याताम्। इदं त्वेनाधिष्ठानग्रहणे असाधारणधर्माग्रहणे च तन्निवृत्तेः। तथा जिज्ञासापि न स्यात्। सामान्यतो विदितविशेष-तश्च वेदितव्ये जिज्ञासाया प्रवृत्ते। अत. उक्तानुपपत्तिपरिहाराय धर्मी धर्माश्च यथाप्रमाणं स्वीकार्या।

धर्मधर्म्यभेदखण्डनम् :

अथ धर्मधर्मिणौ अभिन्नौ सहैवोपलभात्। मृद्घटादिवदित्यनु-मानात् तयो अभेद इति चेन्न। सहैवोपलंभादिति वदतः कोऽय-मभिप्राय? यदुपलंभयो समाव्याप्ति., तयो अभेद इति वा? यदुपलभयोर्व्याप्तिमात्रान्तयोरभेद इति वा? आद्ये शरवोपलभ-व्यापकोपलंभस्य शंखश्वैत्ये विषयता सबंधेनासत्वात् हेत्वसिद्धि। 'पीतश्शख' इति प्रतीतिदशायां शखोपलभे सत्यपि श्वैत्यानुपलभात्। द्वितीये गंधरसादावसिद्धि। गधाद्युपलभेऽपि गधाद्यनुपलभात्। रूपरूपिणो. क्वचित् सहोपलभस्तु एकसामग्रीवेद्यत्वप्रयुक्त इति नोक्तानुमानातदभेदसिद्धि.। अत सिद्धोऽय द्रव्याद्रव्यविभाग। तानि च द्रव्याणि स्थिराण्येव। क्षणभङ्गे प्रमाणाभावात्। प्रत्युत 'सोऽय घट' इति दृष्टमेव स्पृशामीति प्रत्यभिज्ञाप्रत्यक्षेण स्थि-रत्वस्यैव स्थापनात्।

भ्रान्तिरिय प्रत्यभिज्ञेति चेन्न। कारणदोषबाधकप्रत्ययाभावेन भ्रान्तित्वायोगात्।

अथ यौक्तिकबाधेन प्रत्यभिज्ञाया दोषमूलत्व उन्नीयते। युक्तिश्च करणाकरणाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यास-प्रसंगात्मिका। सामर्थ्यं चेत् कुसूलस्थबीजेनाप्यङ्कुरोत्पत्तिः स्यात्। असमर्थं चेत् क्षेत्रस्थबीजेनाप्युत्पत्तिः न स्यात्। अतः सामर्थ्या-सामर्थ्य रूपविरुद्धधर्मा समावेशाय बीजानां भेदः आवश्यकः। एवमन्यत्रापि। एव च बीजादीना भेदसिद्धौ ज्वालैक्यप्रत्यभिज्ञा वत् सर्वस्या अपि प्रत्यभिज्ञायाः भ्रान्तित्वात् क्षणभङ्गः युक्त इति चेत् मैवम्।

क्षणिकत्वखण्डनम्

समर्थस्यैव बीजस्य जलसंयोगादिरूपसहकारसन्निधि तदभावा-भ्यां करणाकरणोपपत्तेः विरुद्धधर्माध्यासप्रसंगाभावेन बीजैक्ये सिद्धे, प्रत्यभिज्ञायाः निर्बाधत्वेन द्रव्याणा स्थिरत्वसिद्धे निष्प्र-त्यूहत्वात्। न च सहकारिसन्निध्यो विरुद्धयोर्वा कथमेकत्र समवेश इति वाच्यम्। तयोरपि तत्तत् सामग्री सन्तानप्रतिनियतत्वात्। तत्रापि एव चोद्ये अनवस्थेति चेन्न। बीजाङ्कुरवदप्रामाणिका-नवस्थाया अदोषत्वात्।

यत्र केवलयुक्त्या भासेनाप्रामाणिकार्थपरपराक्लृप्ति जाति-वादे जाते जातिमत्वे परमाणुकारणवादे परमाणोरपि सावयवत्वे व्यावर्तकस्वरूपस्य विशेषपदार्थस्य व्यावर्तकान्तरापेक्षत्वे तत्रैवा-नवस्थायाः दोषत्वम्। अन्यथा क्षणिकत्वेऽपि बीजस्य तस्मिन्नेव क्षणे क्षेत्रविशेष बीजमङ्कुर जनयति। न देशान्तर इति करणा-

करणाभ्यां सामर्थ्यासामर्थ्यरूपविरुद्धधर्माध्यासप्रसंगेन क्षणेऽपि क्षुभ्यमाणेशून्यवाद एव शरणीकरणीय इत्यकामेनापि द्रव्याणा स्थिरत्वमेष्टव्यम्। अत एव क्षणभंगानुमानमपि वह्ने। अनुष्ण-त्वानुमानवत् बाधितमिति अनुमानमपि न प्रमाणम्। तथा हि विप्रतिपन्न वस्तु क्षणिकं सत्वात्। यत् तत्, तत् क्षणिक, यथा जलधरपटलम्। सत्यं च अमी भावाः इति हि तेषां अनुमान-प्रकारः। तत्र वस्तुशब्देन विश्वपक्षीकारे पक्षहेतुदृष्टान्तभेदासिद्धि। जलधरपटलव्यतिरिक्तपक्षीकारे तस्य क्षणिकत्वासंप्रतिपत्त्या दृष्टा-न्तत्वासिद्धे। विरुद्धधर्माध्यासस्य परिहृतत्वात्। तत्र दीपादि-दृष्टान्तोऽप्यनुरपन्न.। तस्य त्रिचतुरक्षणावस्थायित्वाभ्युपगमात्।

अस्तु। तर्हि क्षणोपाधिदृष्टान्त। स हि न स्थिर। तथात्वे क्षणावच्छेदायोगात् इतिचेत्, न। स्थिरैरेव विशेषणान्तरविशिष्टै क्षणोपाधिसंभवात्। क्रियाया चतुः क्षणवृत्तित्वेऽपि स्वजन्यप्राग-भावविशिष्टत्ववेषेणोपाधित्वसंभवात्। न तेन त्वदभिमतदृष्टान्त-सिद्धिः। अतः क्षणिकत्वे प्रमाणाभावात् प्रत्यभिक्षाप्रत्यक्षेण द्रव्यस्य स्थिरत्व सिद्धम्।

द्रव्यविभाग.

तच्च द्रव्यं षोढा। त्रिगुणकालजीवेश्वरनित्यविभूतिमति भेदात्। अथ एषा साधर्म्यमुच्यते। षण्णामपि सयोगित्व साधर्म्यम्। अद्र-व्येषु सयोगाभावात् नातिव्याप्तिः। ईश्वरान्यप्रपञ्चानां ईश्वर-शरीरत्व लक्षणम्। शरीरत्वस्य द्रव्यत्वघटितत्वात् द्रव्येषु नाति-व्याप्ति। त्रिगुणकालनित्यविभूतिमतिनां चेतनत्व पराक्त च

साधर्म्यम्। अचेतनत्वं ज्ञानशून्यत्वम्। नित्यविभूतिमत्योः ज्ञाना-नाश्रयत्वात् लक्षणसमन्वयः।

'ज्ञानानंदमया लोका' इत्यनेन नित्यविभूतेः ज्ञानस्वरूपत्वा-भिधानात्। पराक्त्वञ्च परमात्मा एव भासमानत्वम् 'परस्तात्' इति तादर्थ्ये चतुर्थी। एवकारेण स्वार्थत्वव्युदास.। तथा च पर-प्रयोजनमात्रपर्यवसायि प्रकाशाश्रयत्वमिति फलितम्। तेन स्वामिप्रयोजनप्रयोजकप्रकाशाश्रयभृत्यादौ नातिव्याप्तिः भृति-रूपस्वप्रयोजनस्यापि सत्त्वात्। धर्मभूतज्ञानस्य नित्यविभूतेश्चाचे-तनत्वात्। तत्प्रकाशेनापि धर्मीश्वरयोरेव फलित्वात् लक्षण-समन्वयः। जीवेश्वरनित्यविभूतिमतीनां अजडत्वम् साधर्म्यम्। तच्च स्वतो भासमानत्वं स्वविषयज्ञाननिरपेक्षप्रकाशाश्रयत्वमिति यावत्। तच्च जीवेश्वरनित्यविभूतीनां शास्त्रसिद्धम्। विषयेन्द्रिय-सयोगसमनन्तरं घटमह जानामीत्युपलंभात्। न च सुषुप्तिदशायां धर्मभूतज्ञानस्य प्रकाशादव्याप्तिरिति वाच्यम्। तस्यैव जागरिताव-स्थाया विषयप्रकाशनकाले स्वप्रकाशत्वसत्त्वात्।

नहीदं कालघटितं येन अव्याप्तिः स्यात्? न च तथापि नित्यविभूतेः ससारिणां शास्त्रनिरपेक्षप्रकाशाभावेन स्वप्रकाशत्वं न स्यादिति वाच्यम्। स्वापदशायां धर्मभूतज्ञानस्येव बद्धदशायाम् अप्रकाशत्वेऽपि जागरदशायामिव मुक्तौ तस्या स्वप्रकाशत्वे बाधकाभावात्।

त्रिगुणकालयोः जडत्वं साधर्म्यम् :–

जडत्वं च परत एव भासमानत्वम्? एवकारेण स्वतो भासमानत्वव्यवच्छेदः। तेन कदाचित् परतः भासमानेषु परज्ञानादिषु नातिव्याप्तिः। उन्मेषनिमेषाद्यनुमितपरमात्मानि च नातिव्याप्तिः। तस्य तं प्रति स्वप्रकाशत्वात्। जीवेश्वरयोः प्रत्यक्त्वं ज्ञानकृत्वं च साधर्म्यम्। प्रत्यकत्वं च स्वप्रकाशफलित्वम्। तच्च 'यस्सर्वज्ञ?' 'यस्य ज्ञानमयं तपः?' 'सोऽकामयत' इत्यादि श्रुतिसिद्धम्। जीवस्य तु 'अहं जानामि' इत्यनुभवसिद्धमिति तयोः लक्षणसमन्वयः।

त्रिगुणानि :–

अथ त्रिगुणानि निरूप्यन्ते। तत्र रजोगुणकत्व. तमोगुणकत्व, महदाद्यवस्थार्हत्वानि त्रिगुणलक्षणानि। तत्र प्रकृतिमहदहंकारेन्द्रियतन्मात्रेष्वागमः प्रमाणम्। आकाशादिमहाभूतेषु पञ्चसु प्रत्यक्षं प्रमाणमिति बोध्यम्। तच्चाधोदेशेऽपरिच्छिन्नम्। ऊर्ध्वदेशे नित्यविभूत्या परिच्छिन्नम्। नित्यविभूते तमसः परत्वश्रुतेः। तदनंतमसंख्यातमिति प्रमाणं तु अधोदेशविषयमिति भाव्यम्। तच्च विचित्रसृष्ट्युपकरणत्वेन मया शब्देन विकारान् प्रकरोतीति प्रकृतिशब्देन चोच्यते। इदं च परमेश्वरसंकल्पात् क्वचित्सदृशसन्तानान् क्वचिद्विसदृशसन्तानाश्चारभते। इदं च परिस्पन्दादि योग्यभूतादिपरिणामदशायामपि तच्चिद्रत्वमेव। अतएव स्वकार्य व्यापकत्वं तस्य।

त्रिगुणद्रव्यम् :-

इदमेव त्रिगुणद्रव्यम् । पूर्वावस्थोपमर्दकावस्थाभेदात् चतुर्विंशति तत्वानीत्युच्यते। मूलप्रकृतिः महान्, अहकार, इन्द्रियाण्येकादश, पञ्चभूतानि, पञ्चतन्मात्राणि चेति ।

ननु एकस्य प्रकृतिद्रव्यस्य कथं बहुधाऽवास्थित विचित्रजगद्रूपेण परिणाम इति चेन्न। एकस्यैव मृत्पिण्डस्य घटशरावादिरूपेण विचित्र परिणामवत्तया परिणामोपपत्तेः । न च एवम् अपि अवयव्यनभ्युपगमात् अन्ततः प्रकृतिद्रव्यमेव अनेकजगदासीदिति वक्तव्यं, ततश्च विरुद्धयोः एकत्वानेकत्वयोः कथमेकद्रव्यवृत्तित्वमिति वाच्यम् । एकत्वानेकत्वयो. अपि अवस्थारूपयोः कालभेदेन एकद्रव्यवृत्तित्वे बाधकाभावात् । यथा घटत्वकपालत्वचुर्णत्वाद्यवस्था एकस्यामेव मृदि पूर्वावस्थाप्रहाणेन जायन्ते । तथा प्रकृतिद्रव्येऽपि एकत्वावस्थाप्रहाणेन पुन. एकत्वावस्था जायते । ततश्च प्रलयकाले एकत्वावस्थापन्नप्रकृतिद्रव्यस्य सृष्टिकाले महदाद्यवस्थारूपबहुत्वावस्था पुनः प्रलये तत्प्रहाणेन एकत्वावस्था इत्यभ्युपगमे न विरोधाभावात् । अत्र बहुत्वं च नामरूपविभागानर्हावस्था विशिष्टत्वम् । तद्विरोध्येकत्व च नामरूपविभागानर्हावस्था विशिष्टत्वम्। एनादृशमेव मृत् द्रव्यस्याप्येकत्वमनेकत्व दृश्यते। यथा पिण्डत्वावस्थावस्थितायां मृदि घटशरावादिनामरूपविभागानर्हावस्था विशिष्टत्वादेकत्व व्यवहारः। तस्या एव घटशरावादिरूपेण परिणामे

नामरूपविभागार्हावस्था योगात् बहुत्वव्यवहारः। तथा प्रकृति-द्रव्यस्यापीति नानुपपत्तिः। न चैवमपि अवयवसघातातिरिक्त-प्रकृतिद्रव्यस्याभावेन तस्यैवाशतः परिणामे तत्तदंशा एव यथास्व परिणमन्ति। ते ते अशा एव अणव इति परमाणुकारणवाद एव अगीकृत इति वाच्यम्।

अणुकारणत्वभङ्गः–

शब्दस्पर्शरूपरसगंधरहितसत्वरजस्तमोगुणत्रयाश्रयप्रत्यक्षा-गोचरद्रव्यरूपत्वेन श्रुत्यादिसिद्धे पराभिमतपरमाणुस्वरूपगंधा–भावेन परमाणुकारणत्वासिद्धेः। एतेन परमाणुकारणवादो निरासः। जालालोकविलोकनीय्यत्रसरेणुशब्दवाच्यद्रव्यातिरिक्ताप्रत्यक्षाणुक-ल्पने प्रमाणाभावात् तेष्वेव मात्रया भेदमवलंब्य परमाणु द्व्यणुक त्र्यणुकादिव्यवहारः। तेष्वेव केषाचित् क्वचिद्रूपानुद्भवदशायां प्रत्यक्षगंधाश्रयगंधवहानीतसुरभि भागवत चाक्षुषत्वादिसंभवात्। परमाणोः अप्रत्यक्षत्वव्यवहारश्च न विरुध्यते। न हि पवनानीत–गंधवत् द्रव्येषु परमाणुत्व भवतामिष्टम्। परमाणूनां प्रत्यक्षगुणा-श्रयत्वानभ्युपगमात्। अतः प्रत्यक्षात् न भवदभिमत्तानुसिद्धिः। न चागमान्तसिद्धिः। तथाविधागमाभावात्

ननु श्लो॥ जालसूर्यमरीचिस्थ सूक्ष्मं यत्परिदृश्यते।
तस्याष्टमो वा षष्ठो वा भागोऽणु परिकीर्तितः।

इति शिल्पशास्त्रात्।

श्लो॥ जालसूर्यमरीच्या यत् सूक्ष्मं तस्याष्टमो मतः।
परमाणुरपिवा षष्ठः तद्वयं द्व्यणुकं मतम्॥

'द्व्यणूनामपि षष्ठन्तु परिर्नाम प्रकीर्तित' इति स्वर्ण-स्तेयप्रायश्चित्तविधायक 'धर्मशास्त्राच्च' परमाणुसिद्धिरिति चेन्न। तत्र परमाणुसद्भावतात्पर्याभावात्। मानोन्मादिविशेषनिश्चय-त्रसरेणौ बुध्या कल्पितभागप्रतिपादनपरत्वेन परमाणुद्रव्यासाधक-त्वात्। तथा कल्पनं च त्र्यणुकपरिमाणस्वर्णस्तेयस्य प्रायश्चित्त-बाहुल्यप्रतिपादनाय यथा एकस्यामेव द्वादशकपालकवैश्वानरेष्टौ यदष्टाकपालो भवति, 'गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति'.. इत्या-दिना एकदेशे ब्रह्मवर्चस्वादि प्रतिपादनं द्वादशकपालकवैश्वानरेष्टेः फलभूयस्त्वार्थं, तद्वत् तत्राष्टाकपालत्वादिकं वास्तविकम्। अत्र तु परमाणुत्वपरित्वादिकं बुद्धिकल्पितमिति विशेष.। एवम् अन-भ्युपगमे त्रिसरेण्वष्टमषष्ठभागपरिमितस्य असंभावितस्य अप्रत्य-क्षवस्तुनः स्तेयकारणासंभवेन तदुन्मादकरणवैयर्थ्यप्रसङ्गात्। न च एतादृशासंभावितकल्पनमागमेन दृष्टमिति वाच्यम्। तस्येयं पृथिवी सर्वावित्तस्य पूर्णा स्यात्। 'स एको मानुष आनंद' इत्यादौ दर्शनात्। अतः नागमात् भवदभिमतपरमाणुसिद्धिः।

अण्वनुमाननिरास :

ननु अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतार-तम्यरूपत्वात् महत्परिमाण तारतम्यवत् इत्यनुमानेन सर्वतो-पकृष्टं परमाणुद्रव्य सिध्यतीति चेन्न। तारतम्यरूपत्वात् इत्ये-

तावताऽपि व्यभिचाराभावेन परिम णविशेषस्य हतौ व्यर्थत्वात्। अप-कृष्टमहत्वातिरिक्ताणुपरिमाणासिध्याऽऽश्रयासिद्धेश्च। तस्य च त्रसरेणावेव विश्रान्ते । अथ अवयवापकर्षतारतम्यं क्वचिद्विश्रान्तं तारतम्यरूपत्वात् इत्यनुमानेन सर्वतोऽपकृष्टावयवरूपतया अणो सिद्धिरिति चेन्न। तादृशत्वेन संप्रतिपन्नेन त्रसरेणुना सिद्धसाधनत्वात्। अवयवधाराया अपि तत्रैव विश्रान्ते। अस्तु वा तस्या-विश्रान्तिः। तथाऽप्याधिक्यनूनताभ्यां प्रमाणसिद्धाभ्यां सर्षपमही-धरादि परिमाणाविशेषप्रसङ्गः परिह्रियते। अनन्तत्वाविशेषेऽपि आश्रयाणा परावरजातिषु क्षण दिवसपक्षमाससंवत्सरादिषु अनन्तेषु आधिक्यनूनतयोः भवद्भिः अभ्युपगमात्। यदि घटत्व-पृथिवीत्वयोः आश्रयानन्त्येऽपि घटत्वाश्रय निखिलवृत्तित्वे सति तदनाश्रयवृत्तित्वात् पृथिवीत्वसाधिक्यम्। एवम् अतीतयोः क्षण-दिवसयोः आनन्त्येऽपि एकस्य दिवसस्य अनेकक्षणघटकत्वात् दिवसापेक्षया क्षणानाम् आधिक्यमुच्यते। तर्हि सर्षपमहीधरयो अनन्तावयवकत्वेऽपि सर्षपव्याप्तदेश व्याप्तत्वे सति सर्षपाव्याप्त-देशव्यापित्वात् सर्षपापेक्षया महीधरस्याधिक्यमित्यपि सुवचत्वात्। विप्रतिपन्नं कार्यद्रव्यारब्ध चाक्षुषद्रव्यत्वात् घटवत् इत्यनुमानमपि विपक्षे बाधकाभावात् अप्रयोजकम्। द्रव्यचाक्षुष प्रति महत्वस्य कारणत्वात्। त्रसरेणौ अवयवसंख्याप्रकर्षाधीनमहत्ताया एव वक्त-व्यतया कार्यद्रव्यारब्धत्वमावश्यकम्। अन्यथा त्रिसरेणो. चाक्षु-षत्व न स्यादिति चेन्न। यथोपलंभं योग्यताय : तत्र स्वीकारेण कार्यद्रव्यानारब्धत्वेऽपि बाधकाभावात। अन्यथा महावयवारब्ध-

स्यापि चाक्षुषद्रव्यत्वव्याप्यत्वात् त्रिसरेणौ महावयवारब्धत्व-प्रसङ्गेन परमाण्वसाधकत्वात्। वायवीयतैजसादित्रिसरेणोः पूर्व-भूतात्मककार्यद्रव्यारब्धत्वात् सिद्धसाधनत्वं च। चाक्षुषतयाऽभ्यु-पगते काले व्यभिचाराच्च। पृथिवीत्वं नित्यसमवेतवृत्तिघटपट-वृत्तिजातित्वात् सत्तावत् इत्यनुमानेन साध्यकोटिप्रविष्टतया नित्य-पृथिवीसिद्धौ स एव परमाणुः। एवं जलत्वं नित्यसमवेतवृत्तिः न ह्रदनदीजलवृत्तिजातित्वात्। सत्तावत् इत्यादिकमपि विपक्षे बाधकाभावात् अप्रयोजनम्। पृथिवीत्व नित्यवृत्ति न भवति, पृथिवीमात्रवृत्तिजातित्वात् घटत्ववत् इत्यादिभिः प्रतिपक्षयितुं शक्यत्वाच्च। घटादीनां सर्वेषां नित्येश्वराश्रितत्वाभ्युपगमाति-रिक्तसमवायानभ्युपगमाच्च सिद्धसाधनत्वम्। नित्यवृत्तीति साध-नेऽपि घटादिरूपेण परिणस्यापि त्रिगुणद्रव्यस्य स्वरूपतः नित्यत्वा-भ्युपगमात् स एव दोष.। एवं परमाणूनां कार्यारंभकत्व संयुज्यैव वक्तव्यम्। सच संयोगः कात्स्न्येन उतैकदेशेन वा। कात्स्न्येन चेत् अधिकपरिमाणारंभकत्व न स्यात्। एकदेशेन चेत् परमाणूनां सांशत्वप्रसंगः। तत पराभिमतनिरवयाण्वसिद्धिः। प्रत्यक्षागम-सिद्धाणु नश्वरादिषु सयोगा यथा प्रमाणमगीकार्यः। तत्र नोक्त विकल्पावसर इति श्रुतेस्तु इति सूत्रेण सूत्रकारैः निर्णीतम्। अस्तु तर्हि प्रत्यक्षसिद्धैरेव सूक्ष्मद्रव्यै. जगदारंभः किमेकत्वाव-स्थप्रकृत्या? इति चेन्न। स्वतंत्रारभे शास्त्रविरोधात्। परतंत्रारंभा-भ्युपगमे यथागम प्रकृतेरपि स्वीकार्यत्वात्। भूतचतुष्टयपूर्वभाविनः महदाद्याकाशपर्यन्तप्रपञ्चस्य भूतचतुष्टयारभणीयत्वायोगात्।

'आकाशाद्वायुः' 'वायोरग्निः' इति सृष्टिक्रमविरोधाच्च। भूत-चतुष्टयातिरिक्ता नित्यद्रव्यजातं नास्तीति चेन्न। आकाशात् उत्पत्तिबोधकागमविरोधात्। तथा त्रसरेणूनामेव जगदादिरहितावस्था-स्वीकारे तद्वत् तेषाम् एकीभावावस्था स्वीकार्येति, सैव मूलप्रकृतिरिति सिद्धम्।

त्रिगुणसृष्टिक्रमः

साच समत्रैगुण्या। तस्यामपि मात्रया भेदमाश्रित्या-व्यक्ताक्षरतमोरूपावस्थात्रयमप्याहुः केचिदाचार्याः। तत्पक्षे 'अव्यक्तमक्षरे लीयते, अक्षर तमसि लीयते' इति श्रुत्यनुगुण्यम्। यदा सत्वरजस्तमसां साम्यम् । तदा प्रलयावस्था। यदा तेषां वैषम्यं तदा सृष्ट्यवस्थेति बोध्यम्। अव्यक्ताव्यवहितोत्तरावस्था विशिष्टम्। अहंकाराव्यवहितपूर्वावस्था विशिष्ट वा त्रिगुण महान्। अहंकारादौ च अव्याप्तिवारणायाव्यवहितेति। स त्रिविधः। सात्विको राजसस्तामसश्चेति। सत्वादिगुणोन्मेषवशात् अंश भेदेन तत्तद्व्यपदेशः। इन्द्रियाद्व्यवहितपूर्वावस्थाविशिष्टं त्रिगुणम् अहंकारः महत्यतिव्याप्तिवारणाय अव्यवहितेति 'अहमभिमानोऽहंकार' इति सांख्यलक्षणं तदसंगतम् अहमभिमानरूपा-हंकारस्यात्मधर्मभूतस्य प्राकृतद्रव्यनिरूपणप्रकरणे तन्निरूपणा-साङ्गत्यात्। अव्यक्तपरिणामभूतोऽहंकारः। अनात्मनि देहेऽहंभावकरणहेतुत्वमावादहंकारशब्दवाच्यः। अहमभिमानरूपाहङ्कारस्य आत्मधर्मभूतस्याहंकारद्रव्यकार्यस्य उत्कृष्टजनावमानहेतोः गर्वा-

परपर्यायस्य

तु श्लो॥ अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्ममश्शान्तोब्रह्मभूयाय कल्पते॥ इति

त्याज्यत्वमुच्यते। अव्यक्तपरिणामाहंकारद्रव्यस्य त्याज्यत्वासंभवात्। अतः अस्याह मानहेतोः अहमभिमानत्वासंभवात् सांख्यलक्षणं असंभवग्रस्तमिति बोध्यम्। असावपि त्रिविधः। सात्विकराजसतामसभेदात्। तत्र सात्विकादेकादशेन्द्रियाणि जायन्ते तामसात् शब्दतन्मात्रं, राजसस्तु उभयानुग्राहकः। राजसतामसयोरपि इन्द्रियाव्यवहितपूर्वावस्थाविशिष्टत्वात् लक्षणसमन्वयः। तत्रेन्द्रियजनकत्वं सात्विकाहंकारलक्षणम्। शब्दतन्मात्रजनकत्व तामसाहंकारलक्षणम्। उभयानुग्राहकत्वं राजसाहंकारलक्षणम्।

इन्द्रियलक्षणम् :—

हृत्कर्णचक्षुरादिप्रदेशविशेषावच्छिन्नव्यापारतया तत्तत्कार्यविशेषशक्तमिन्द्रियम्। मन इन्द्रियं हृत्प्रदेशावच्छेदेन घ्राणेन्द्रियं नासाग्रावच्छेदेन। श्रोत्रेन्द्रियं कर्णावच्छेदेन। त्वगिन्द्रियं सर्वावयवावच्छेदेन। चक्षुरिन्द्रियं कृष्णताराग्रावच्छेदेन। रसनेन्द्रियं रसनाग्रावच्छेदेन। पाणीन्द्रियं हस्तावच्छेदेन। पादेन्द्रियं पादावच्छेदेन। पायूपस्थेन्द्रिये तत्तत्प्रदेशावच्छेदेन। व्यापारि सत् मृत्याद्यानंदपर्यन्त तत्तत्कार्यं करोतीति तेषां लक्षणसमन्वयः। अशरीर प्राणधार्यमेव यत् द्रव्यं पुरुषोपकारकं तदिन्द्रियमिति वा लक्षणम्।

शरीरे अतिव्याप्तिवारणायाशरीरमिति। वैशेषिकोक्तान्यप्रत्यक्ष-साक्षात्कारसाधनमिन्द्रियम्। शरीरसंयोगे सत्येव साक्षात्प्रमिति साधनम् इन्द्रियम्। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञान-कारणमनस्संयोगाश्रयत्वं इदियत्वमित्यादीन्द्रियलक्षणानि कर्मे-न्द्रियाव्याप्तेः अनादरणीयानि। वक्ष्यते च नागादीनामपि इन्द्रि-यत्वम्।

इन्द्रियविभाग:

तच्चेन्दियं द्विविधम्। प्राकृतमप्राकृतं चेति। शुद्धसत्वे सति इन्द्रियत्वम् अप्राकृतेन्द्रियत्वम्। मिश्रसत्वे सतीन्द्रियत्वं प्राकृतेन्द्रियत्वम्। अव्यक्त, महदहंकारेष्वपि प्राकृताप्राकृतविभागोऽस्तिति केचिदाचार्याः। पुनश्चेन्द्रियं द्विविधम्। ज्ञानेन्द्रियं, कर्मे-न्द्रियं चेति।

ज्ञानेन्द्रियं, तस्य विभागश्च

ज्ञानप्रसरणजनकमिन्द्रियं ज्ञानेन्द्रियम्। तच्च षोढा। मनः श्रोत्रत्वक्चक्षुरसनाघ्राणभेदात्। तत्र प्राकृतबाह्येन्द्रियलक्षण-मुच्यते। मिश्रसत्वे सति शब्दादिपंचविषयज्ञानासाधारणकारण-मिन्द्रियं प्राकृतबाह्येन्द्रियम्। मिश्रसत्वे सति स्मृतिकारणेन्द्रियं प्राकृतमनः। तच्च हृत्प्रदेशमात्रवृत्ति। इन्द्रियान्तराणामपि हृत्प्रदेश एव कन्दस्थानम्। स्थानान्तरेषु स्वस्व कार्यकरणाय कादाचित्कं वृत्तित्वम्। आत्मनोऽपि तत्रैव वृत्तिः। मनसो व्यापारविशेषादेव

संकल्पविकल्पाध्यवसायादय उत्पद्यन्त इति नान्त करणत्रैविध्यम्। मन एकमेवान्तः करणमित्युच्यते। एतेन सांख्योक्तान्तः करणत्रैविध्याद्यपास्तम्।

बाह्येन्द्रियम् :—

मिश्रसत्वेसति शब्दादिपंचविषयज्ञानासाधारणकारणत्वं त्राकृतबाह्येन्द्रियत्वम्। शब्दादिपंचके शब्दमात्र ग्रहणत्वं प्राकृतबाह्येन्द्रियत्वम्। शब्दादिपंचके शब्दमात्रग्रहणशक्तमिन्द्रियं प्राकृतश्रोत्रम्। तन्मनुष्यादीनामपि कर्णशष्कुल्यवच्छिन्नप्रदेशवृत्ति। द्विजिह्वानां नयनवृत्ति। आकाशः इन्द्रियारंभकः, भूतत्वात्, पृथिवीवत्। शब्दः स्वसमानजातीयगुणवतेन्द्रियेण गृह्यते।

बहिरिन्द्रियव्यवस्था हेतुगुणत्वात् रूपवत्। श्रोत्रं स्वग्राह्यगुणसजातीय गुणवत् बहिरिन्द्रियत्वात्। चक्षुर्वदित्यनुमानानां चक्षुरादीनामभौतिकत्वस्य वक्ष्यमाणत्वात् दृष्टान्तासिद्धिः। श्रोत्रादोनामाहंकारिकत्वश्रुत्या वह्न्यनुष्णत्वानुमानवत् बाधितत्वञ्च। शब्दस्य द्रव्यत्वाद्रव्यत्वश्रोत्रगमनशब्दागमनादि विवादमद्रव्ये शमयिष्यामः। शब्दादिपंचकमध्ये स्पर्शमात्रग्रहणशक्तं प्राकृतत्वगिन्द्रियम्। तच्च कृत्स्नवपुर्वृत्ति। प्रदेशभेदेन स्पर्शोपलभतारतम्यं नखदन्तकेशेषु स्पर्शानुपलंभश्च प्राणवायुमान्द्यतारतम्यात्। त्वगिन्द्रियं वाय्वादिभूतचतुष्टयमुद्भूतस्पर्शगुणकं गृण्हाति संयोगेन।

उद्भूतस्पर्शन्तु संयुक्तनिष्ठतया। श्रोत्रं तु न द्रव्यग्राहकं, किंतु संयुक्तनिष्ठतया पंचभूतवृत्तिशब्दमात्रग्राहकम्। संयुक्तनिष्ठत्वं संबंधः। शब्दादिमध्ये रूपमात्रग्रहणशक्तमिन्द्रियं प्राकृतं चक्षुः।

तच्च वायुव्यतिरिक्तभूतचतुष्टयं संयोगेन गृण्हाति। तच्च नायनगोलकवृत्ति। गगनस्यापि चाक्षुषत्वं वक्ष्यामः। उद्भूतरूपवत्त्वं चक्षुर्योग्यत्वम्। अत। प्रभायाः उद्भूतस्पर्शाभावात् न त्वाच प्रत्यक्षत्वं वायोरुद्भूतरूपाभावात् न चाक्षुषत्वम्। प्रसृतचक्षुर्महत्संबंधाद्दूरस्थग्रहणम्। स्फटिकादौ नायनप्रभामात्रप्रवेशयोग्यत्वसत्वात्। सर्वेषां तद्व्यवहितानामुपलभः। अंजनादिसंस्कृतनयनप्रभायाः पृथिव्यादावनुप्रवेशसामर्थ्यात् अंजनात्त चक्षूषा पृथिव्यादिव्यवहित निधिप्रभृतिरुपलभ्यते। शब्दादिपंचकमध्ये रसमात्रग्राहकमिन्द्रियं रसनम्। तच्च जिह्वाग्रवर्ति। सयुक्तनिष्ठतया रसग्राहकम्। शब्दादिपंचकमध्ये गंधमात्रग्राहकमिन्द्रियं घ्राणम्। तदपि संयुक्तनिष्ठतया गध गृण्हाति। तथा च विषयेन्द्रिय संबंधः संयोगः, संयुक्तनिष्ठता चेति द्विविधः।

ननु शब्दत्वादिसाक्षात्काराय संबधांतरमपि स्वीकार्यमितिचेन्न। शब्दस्पर्शरूपरसगंधादिषु स्वरूपातिरिक्त धर्मानभ्युपगमात्। तदप्यद्रव्ये वक्ष्यते। तदेवं मनस्त्वक्चक्षूंषि द्रव्याद्रव्यग्राहकाणि श्रोत्ररसनघ्राणानि अद्रव्यग्राहकाणि।

यद्वा सर्वेन्द्रियाणामपि तत्तत्कालादिविशिष्टवस्तुग्राहकत्वात् द्रव्याद्रव्यग्राहकत्वम्। पूर्वोक्तविभागस्तु प्राधान्येन द्रव्यग्रहणाभिप्रायेणोक्तः।

त्वगादीनां वायवीयत्वादि निरासप्रपञ्चनम् :—

अत्र वैशेषिकाः त्वगिन्द्रियं वायवीयं स्पर्शादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्। अगसंगिशैत्याभिव्यञ्जकव्यजनपवनवत्। चक्षुस्तैजसं स्पर्शादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वात्, दीपप्रभावत्। रसनं जलीयं स्पर्शादिषु मध्ये रसस्यैवाभिव्यञ्जकत्वात्। सक्तुरसाभिव्यञ्जकोदकवत्। घ्राणं पार्थिवं स्पर्शादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्। कुङ्कुमगंधाभिव्यञ्जकगोधृतवत् इत्याद्यनुमानैः त्वक्चक्षुर्जिह्वाघ्राणानि क्रमेण वायुतेजस्सलिलपृथिवीमयानीति साधयन्ति, तदसत्। तत्राभिव्यञ्जकत्वं नाम किं तदभिव्यक्तिकरणत्वम्? उत तदभिव्यक्तिहेतुत्वं वा? अभिव्यक्तिश्च प्रकाशः ज्ञानमिति यावत्। तथाच तत् ज्ञानकरणत्वम्। तत् ज्ञानहेतुत्वं वा तदभिव्यञ्जकत्वमिति फलितम्। आद्ये स्पर्शादिज्ञानं प्रतीन्द्रियाणामेव करणत्वात् व्यजनपवनादिदृष्टान्तानां साधनवैकल्येन हेतोः असाधारणानैकान्तिकत्वम्। सर्वं सपक्षविपक्ष व्यावृत्तत्वात् हेतोः द्वितीयकालादृष्टेश्वरेषु व्यभिचारः। तेषां कार्यमात्रकारणत्वात्। अथ हेतौ स्पर्शस्यैवेत्युक्त्या स्पर्शेतरानभिव्यञ्जकत्वे सति स्पर्शाभिव्यञ्जकत्वमिति विशिष्टो हेतुः तस्य कालादावभावात् न व्यभिचारः इति चेत्, तर्हि त्वक्संयुक्तत्वादिषु व्यभिचारः, अभौतिकानां तेषां स्पर्शादिमात्राभिव्यञ्जकत्वात्। द्रव्यत्वे सतीति विशेषणेऽपि इन्द्रियाधिष्ठानगोलकादौ तत्संस्कारे अञ्जनादौ व्यभिचारः, इन्द्रियाधि—

ष्ठानस्यापि परंपरया हेतुत्वात्। आगमबाधश्च सर्वेषामपि। आगमान्तरेण तु अयोगोलकाद्यतिरिक्तेन्द्रियासिद्धेः। त्वाचचाक्षुषादिकार्यं करणपूर्वकं कार्यत्वादिति साधनेऽपि करणमात्रं सिद्ध्यति। न त्वक् गोलकाद्यतिरिक्तम्। न च गोलकादेः अवैकल्येऽपि दर्शनादिकार्यवैकल्यादतिरिक्तं कल्प्यत इति वाच्यम्। तत्र गोलकादि वैकल्यस्यैव सत्वात्। सूक्ष्मस्य तद्वैकल्यस्य मूषिकाकृतबीजवत् दुर्दर्शत्वात्। नचेन्द्रियाणां प्राप्यकारित्वनियमात् गोलकस्य दूरस्थविषयसंबंधाभावात्। गोलकादिरिक्तमेवान्यथानुपपत्त्या सिद्ध्यतीति वाच्यम्। पुष्पात् परिमलप्रसर इव पार्थिवगोलकावयव प्रसर इव पार्थिव गोलकावयवप्रसारवशादेव विषयसंबंधासिद्धेः। प्राप्यकारित्वाविरोधात्। अतः कनीनिकालक्षणगोलकसत्वे चाक्षुषम्।

तदभावेन चाक्षुषमिति अन्वयव्यतिरेकसिद्धस्य गोलकस्य पक्षीकारे तस्य प्रत्यक्षतः पार्थिवत्वात् तैजसत्वसाधने बाधः। आगमसिद्धस्याहङ्कारिकस्य पक्षीकारे धर्मिग्राहकबाधोऽवर्जनीयः। यत्तु आलोकाभावे जायमानोरूपादिसाक्षात्कारः तेजः करणकः, रूपसाक्षात्कारत्वात्। आलोक जायमानः साक्षात्कारवदित्यनुमानेन तत्करणत्वेन तेजसिद्धौ इतरेषां बाधात् चक्षुरेव तत्करणतया सिद्ध्यतीति। तदपि न। आप्यायक तेजसा सिद्धसाधनात्। 'मोक्षधर्मे भृगुभारद्वाज संवादे' 'आप्याय्यन्तेच नित्यं धातवस्तैस्तु पंचभिः' इति इन्द्रियाणां तत्तद्भूतैराप्यायित्वसिद्धेः। तेजसस्तत्र कारणत्वेऽपि तच्चक्षुरेवेति नियामकाभावात्। इन्द्रियवदेवानुद्भू-

तस्पर्शरूपस्य कस्यचिद्वाह्ये तेजसो ग्रीष्मोष्मवत्संभवात्। उद्भूत-रूपवत्त्वस्यापि तत्र साधने भवदभिमतेन्द्रियस्यापि तथात्वप्रसङ्गे-नालोकाभावरूपतमस एवासिद्धिप्रसङ्गात्। ईश्वरज्ञाने व्यभिचा-रश्च। तस्य नित्यत्वेन तेजः करणत्वरूपसाध्यशून्यत्वात्। रूप-साक्षात्कारत्वहेतो. सत्वाच्च। अनित्यत्वे सतीति विशेषणे स्वाप्ने योगिरूपसाक्षात्कारादौ च व्यभिचारः। तत्तद्व्यभिचारस्थल व्यतिरिक्तत्वविशेषणे तु आविष्कृतं तत्कौशलम्। एवम् अनुमा-नान्तरेऽपि यथासंभव दूषणमूह्यम्। अप्राकृत श्रोत्रादिषु तु मुक्ते-श्वरादीनां करणाधीनज्ञानप्रसराभावेऽपि स्वेच्छया परिग्रहात् विषयनियम· सहकारिनियमश्चानपेक्षितः। अतः तत्तदधिष्ठान-विशेषैरेव तत्तल्लक्षणसूह्यम्। अत एव 'श्रीवत्साङ्कमिश्राः अपि

श्लो॥ त्वकचदृकच निपिपासति जिह्वा
विवह्वलाश्रवणवत्परवृत्तौ।
नासिका त्वयि करीश तथेति प्राप्नुयां
कथमिमांस्विदवस्थामित्यनुजगृह.॥,

यस्यामवस्थायां त्वक् स्पर्शमात्रग्रहणशक्तं त्वगिन्द्रियं दृकचरूपमात्रग्रहणशक्त चक्षुरिन्द्रियं च निपिपासति नितरां पातुमिच्छति, रसनैकगोचररससाक्षात्काररूपव्यापारे विह्वला आसक्ता भवति। नासिका घ्राणेन्द्रियमपि तथा शब्दादिग्रहण-धुरन्धर भवति। त्वयि सर्वगन्धः सर्वरस इत्याद्युक्तशब्दादिसर्व-विषयपरिपूर्णे सर्वेन्द्रियविषयभूत दिव्यमङ्गलवति तादृशीमवस्थां कथ ञ्चित् प्राप्नुयाम्। तथा च मुक्त्यवस्थायामिन्द्रियाणां विषय-

नियमाभावादिन्द्रियनिरपेक्षसर्वविषयकज्ञानसंभवात् तादृश्यवस्था प्रार्थिता। भवतीति श्लोकतात्पर्यात्।

कर्मेन्द्रियप्रपञ्चः :-

उच्चारण, शिल्पकरण, गमन, गलोत्सर्जनानंदविशेषाद्यन्यतमहेतुत्वं तल्लक्षणम्। तच्च पञ्चविधम्। वाक्, पाणि, पाद, पायु, उपस्थाभेदात्। तत्र वर्णोच्चारणकारणमिन्द्रियं वाक्। तच्च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टकवृत्ति। शुकादि व्यतिरिक्तविहंगादीनां तत्तद्दुष्टविरहाद्वर्णोच्चारणाशक्तिः। शुकादीनामपि किञ्चिददृष्टवैकल्यात् उच्चारणवैषम्यम्। मूकस्य तु कर्मविशेषेण प्रतिबधात् उच्चारणाशक्तिः। शिल्पकरणमिन्द्रिय पाणिः। स च मनुष्यादीनामङ्गुल्यादिवृत्तिः वारणादीनां नासावृत्तिः। ननु तालुपादादिभिरप्यभ्यासपाटवात् मौक्तिकग्रथनलिपिकरणादिदर्शनात् तत्रापि तद्वृत्तित्वमस्त्येव, विरोधाभावात्। इन्द्रियान्तरव्याप्तप्रदेशे, इन्द्रियान्तरवृत्तेः चक्षुस्पर्शनादौ दर्शनात्। संचारकरणमिन्द्रियं पादः। स च मनुष्यादीनां चरणवृत्तिः। सर्पपतङ्गादीनामुरः पक्षादिवृत्तिः। मान्दालादीनामास्य वृत्तिः। आनंदविशेषकरणमिन्द्रियमुपस्थः। ननु कर्मेन्द्रियाणि न सन्ति, गमनादिकार्येषु पादादीनां सहकारित्वेनोपपत्तेरितिचेत्, तर्हि चक्षुरादीनामपि इन्द्रियत्वं मास्तु। तेषामपि चाक्षुषादि कार्ये सहकारित्वेनोपपत्तेः। रूपादिज्ञान किञ्चित्करणक जन्यज्ञानत्वात्। शाब्दज्ञानवत् स्मृतिवच्चेत्यनुमानाच्चक्षुरादीनामेव करणत्वावश्य-

कतया तेषाम् इन्द्रियत्वसिद्धिरिति चेत्, तथा गगनादिकार्यं सकरणकं कार्यत्वात् छेदन नलभेदनवदित्यनुमानात् तेषामपि करणत्वावश्यकतेन्द्रियत्वसिद्धे ।

यद्यपि गमनादौ करणत्व सिद्धम्। तथापि इन्द्रियत्वं न सिध्यतीति चेत्न। देहादयधिष्ठानकत्वे सति जीवोपकारकत्व-स्यैवेन्द्रियत्वपदार्थत्वात्। अतः नर्कागमयोगशयनतुल्यत्वात् एका-दशैवेन्द्रियाणीति सिद्धम्। पादादौ विद्यमानेऽपि क्वचित् गम-नाद्यभावः गृध्रसीरोगपिजिंपेण प्रतिबन्धनात्।

श्लो॥ इन्द्रियाणि दशैकञ्च पञ्चचेन्द्रियगोचराः'

इति हि शास्त्रम्। एतानि इन्द्रियाणि उपलब्धन योग्यपरिच्छिन्न परिमाणवन्ति। तमुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्तीति जीवेन सहोत्क्रमणश्रवणात्, तदानी पार्श्वस्थैः अनुपलंभाच्च। एतेषां विकारशीलत्वाच्च मशकमातङ्गादिविचित्रदेहेषु विचित्रपरि-णामत्वं कालभेदेन परिणामभेदे विरोधाभावात्।

अत्रेदं बोध्यम्—तमुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति।

श्लो॥ शरीरं यदवाप्नोति यच्चाप्युत् कामत्क्रामतीश्वरः।
गृहीत्वेतानि गयाति वायुर्गन्धानि नाशयेत्॥ इति॥

श्रुतिस्मृतिभ्यां जीवस्य शरीरान्तरप्राप्तौ पूर्वशरीरसंबंधीन्द्रि-याणामेवोपकारकत्वेन मशकशरीरजीवस्य मातंगशरीरप्राप्तौ मशकशरीरपरिमित त्वगिन्द्रियादे मातंगशरीरव्यापित्वलाभाय

इन्द्रियाणां परिमाणविशेष स्वीकार्य इति सर्वेषामेषां स्वाधिष्ठानदोष एव दोषः। तेनान्धस्य शरीरान्तरपरिग्रहेनान्धत्वम्। सुषुप्त्यादि दशा विश्वस्थावरादिशरीरेषु कर्मणा प्रतिबन्धात् विद्यमानानामपि इन्द्रियाणां तत्तद्व्यापाराभावः प्रबलादृष्टवशात् योगिप्रभृतीन्द्रियाणाम् अतिसूक्ष्म व्यवहितविषयत्वम्। स जीव परकायप्रवेशेऽपि जीवस्य मृतपरकायप्रवेशवत् स्वेन्द्रियैरेव उपकारकत्वं न तु परेन्द्रियैः। 'शरीरं यदवाप्नोति' इति स्मृतेः।

ननु परकायप्रवेशाभ्युपगमे एकस्यैव शरीरस्य कालभेदेन उभयशरीरत्वस्यावश्यकतया यवस्तक्तं मतेन वा प्रविष्टेन वाऽधार्यतया उभावपि प्रतिशरीरत्वं न स्यात्। एवं परकायप्रवेशदशायां परित्यक्तस्याशिथिलस्य पूर्वावस्थस्यैव सतः कालान्तरे पुनः परिग्रहे तस्यापि यावस्तक्त धार्यत्वाभावात् तस्यापि शरीरत्व न स्यादिति चेन्न। मृतपरकायस्य परकायत्वव्यवहारो गौणः। दग्धपटे पटव्यवहारवत्। प्रविष्टं प्रतिकायत्वं तु इष्टमेव। परकायारम्भकास्थ्यादिभिः प्रविशता पुरुषेणानीतैर्भूतसूक्ष्मैश्च तदानीं शरीरान्तरभात्। एवं मृतपरकायप्रवेशे तु परकायत्वं मुख्यम्। प्रवेशानन्तरमपि पूर्ववत् तत्पुरुषेण धार्यत्वात्। अनेकशरीराधिष्ठानशक्तानां तु यथेच्छमनेकशरीराधिष्ठानमन्यतरस्य त्याग इति नानुपपत्तिः। शरीरविनाशे च इन्द्रियाण्यपि आप्यायकैर्मात्रया हीयन्ते। शरीरान्तरपरिग्रहे पुनरापूर्यन्ते। मुक्तपरित्यक्तानीन्द्रियाणि शिलाकाष्ठादिशरीरकैरन्यैः मनुष्यादिदेहप्राप्तौ परिगृह्यन्ते, कानिचिन्न परिगृह्यन्त एव। तानि सर्वाण्याप्रलय–

न्तिष्टन्ति। अतः इन्द्रियाणि एकादशसात्विकाहङ्कारजन्यानि आप्रलयं स्थितानीति सिद्धम्। तत्तद्भूतानामव्यवहितपूर्वावस्था विशिष्टं द्रव्यं तन्मात्रम्। दधिरूपेण परिणाममानस्य पयसः मध्यमावस्थावत् भूतरूपेण परिणममानस्य द्रव्यस्य, ततः पूर्वा काचिदवस्था तन्मात्रम्। तद्विशिष्टद्रव्यं सूक्ष्मशब्दादिविषयाधि-करणं तन्मात्रमित्युच्यते। तदेव तत्तद्भूतोपादानम्। विशिष्टश-ब्दादिविषयाधिकरणं भूतम्। विशिष्टत्व न प्रत्यक्षयोग्यत्वम् अत्रापि प्राकृताप्राकृतविभागः पूर्ववत्।

तन्मात्रश्च शब्दतन्मात्र, स्पर्शतन्मात्र, रूपतन्मात्र, रस-तन्मात्र, गन्धतन्मात्रभेदात् पञ्चविधम्। भूतमपि आकाशवायु-तेजोजलपृथिवीभेदात् पञ्चविधम्। तत्र तामसाहङ्काराकाशयोर्म-ध्यमावस्था विशिष्टद्रव्य शब्दतन्मात्रं, स्पर्शतन्मात्रञ्च वाय्वार-भकम्। एतत् द्वयसहितं रूपतन्मात्र तेज आरंभकम्। त्रितय-सहित रसतन्मात्रं जलारभकम्। चतुर्भिस्सहितं गधतन्मात्रं पृथिव्यारभकम्। ततश्च तन्मात्रमेव साक्षात् भूतोपदानम्। न तु भूतान्तरस्य तन्मात्रद्वारा भूतान्तरोपादानमित्याहुः– तदसत्।

'आकाशाद्वायुः' इत्यनन्यथासिद्धोपादानक्रमविशेषाभिधान दर्शनात्।

भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः।
ससर्ज शब्दतन्मात्रं आकाश शब्दलक्षणम्॥

आकाशंच विकुर्वाणं स्पर्शतन्मात्रं ससर्जह ।
बलवानभवद्वायुः तस्य स्पर्शो गुणो मतः ॥

ततो वायुर्विकुर्वाणो रूपमात्रं ससर्जह ।
अन्यत्र शब्दतन्मात्रम् अभवत्तच्चाकाशमजीजनत् ॥

स्पर्शमात्रस्तथाकाशात् तस्माद्वायुरजायत ।
रूपमात्रं ततो वायो तस्मादग्निरजायत ॥

रसतन्मात्रतु जज्ञेऽग्ने तस्मादापः प्रजज्ञिरे ।
गंधतन्मात्रमद्भ्योऽपि गंधमात्रात्ततोमही ॥ इत्यादि प्रमाणा-
दर्शनाच्च ।

'तन्मात्राणि भूतादौ लीयन्ते' इति श्रुतिस्तु न यौगप-
द्येन तन्मात्राणां भूतादौ लयपरा। किंतु यथाकथञ्चित् लयप्रति-
पादिकाः। अत एव क्रमविशेषोऽपि तत्र प्रतिपाद्यते। 'आकाश.
इन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु' इति। तेषामपि अनभिमतक्रम-
विशेषप्रतीतेः। अतः न तद्भूतद्वयमव्यगावस्था विशिष्टद्रव्य-
लक्षणस्य स्पर्शतन्मात्रादिषु अव्याप्तिः ।

आकाशोत्पत्तिप्रतिपादनम् :-

शब्दतन्मात्रादाकाशम्, तद्गुणो । निस्पर्शत्वे सति विशि-
ष्टशब्दाधारत्वं श्रोत्रेन्द्रियग्राहकत्वञ्चाकाशलक्षणम्। वाय्वा-
दावतिव्याप्ति वारणाय सत्यन्तम्। न च शब्दाधारत्वभावादेव

वायौ नातिव्याप्तिरिति वाच्यम्। शब्दस्याकाशपञ्चभूतवृत्तित्वस्य वक्ष्यमाणत्वात्। प्रकृत्यादावतिव्याप्तिवारणाय विशिष्टेति। अयश्चावकाशदानादिना उपकरोतीति शास्त्रसिद्धम्।

ननु आकाशो नित्यः विभुश्च, निरवयवद्रव्यत्वात्। कालवत्, इत्यनुमानादिति चेन्न।'एतस्माज्जायन्ते प्राणो मनस्सर्वेन्द्रियाणि च' इत्युपक्रम्य 'खं वायुर्ज्योतिरापः पृथिवी'। 'आत्मनः आकाशः संभूतः' इत्यादिवाक्यै. आकाशानित्यत्वबोधनेन—

श्लो।। प्रधानतत्वमुद्भूतं महान्तन्तत्समावृणोत्।
यथा प्रधानेन महान् महता स तथावृत।।

इत्यादिना उत्तरोत्तरतत्त्वस्य पूर्वपूर्वतत्वावायत्वबोधनेन च। तद्विरुद्धनित्यत्व, विभुत्व साधकानुमानानुदयात्। किञ्च इदं नित्यत्वं किमवस्थाशून्यत्व? उत द्रव्यस्य सर्वदासत्वम्। नाद्यः, आरंभकसंयोगरूपावस्था वस्तु पृथिव्यादिपरमाणुषु निरवयवद्रव्यत्व हेतोः सत्वात् व्यभिचारः। पक्षे च शब्दवत्वरूपावस्था स्वीकारेण बाधश्च। घटादिसयुक्ते काले द्वितीयतृतीयहेत्वोः। व्यभिचारः। गगनस्य घटादिसयुक्तत्वात् बाधाश्च। घटादिसंयोगानभ्युपगमे कालाकाशयोः विभुत्वं न स्यात्। सर्वमूर्तद्रव्यसयोगित्वस्यैव विभुत्वात्। न द्वितीयः। सिद्धसाधनात्। अकाशत्वावस्थाविशेषितप्रकृतिद्रव्यस्य सर्वदासत्वात्। प्रत्यक्षश्चायमाकाशः। यदोन्मीलनञ्च क्षुपः तदा नील नभः इतिप्रतीतेः। ननु नभसि तलत्वादिवत नीलत्वमपि आरोपितमितिचेत् न। असावारोपः चाक्षुपः

अन्यो वा आद्ये आधिष्ठानस्यापि चाक्षुषत्वमेष्टव्यम्। अन्यथा ईश्वरादावपि नैल्याद्यारोपप्रसङ्गात्।

द्वितीयेत्वसंभवः। निमीलिताक्षस्य तादृशारोपादृष्टेः। अत एवानुमिते नभसि नैल्यारोप इत्यपि परास्तम्। न च नीलं नभः इति धीरेव नास्तीति वाच्यम्। विश्वविसंवादप्रसङ्गात्। नाप्यसावचाक्षुषः अस्मदादि चक्षुर्व्यापारानुविधायित्वात्।

ननु नभसि विततानां पार्थिवांशानां कृष्णगुणमात्रं चक्षुषा गृह्यत इति चेन्न। नीलं नभ इति धर्मिपर्यन्तोल्लेखात्। नीलमिति नपुंसकत्वेन गुणिलिङ्गोल्लेखाच्च। एवम् 'असौ कूप' 'एतत् रन्ध्रं' 'इह खगः पतति' इत्यादिचाक्षुषमपि नभसि प्रमाणम्। ननु इहेति पक्षिपतनाधारत्व प्रतीयते। तच्च आतपादेरेव, न नभसः, तस्यात्यन्तपरोक्षत्वादिति चेन्न। इह आतपादिरिति आतपाधिकरणत्वेन इह शब्दार्थप्रतीते

गगनकाशानामस्माकम् अभ्युपगमेऽप्यप्रत्यक्षत्वात्। एव-मिह भूमौ आतप इदं नभसि आतप इति सर्वलोकव्यवहारात्।

ननु नभः न चक्षुषा गृह्यते, रूपशून्यद्रव्यत्वादात्मवत्। नापि त्वचा (त्वचा) गृह्यते स्पर्शशून्यद्रव्यत्वात्, पूर्ववत्। नापि-मनसा बहिष्ठत्वात्। नापि घ्राणादिभि तेषां द्रव्यग्रहणासमर्थ-त्वात्। तत नाप्रत्यक्षमेव गगनमिति चेन्न। नीलं नभ इत्यस्मात् ज्ञान प्रत्यक्षमिति समीचीनत्वात्। प्रतिप्रयोगश्च विगीतमस्म-

दादि वाह्येन्द्रियग्राह्यम्। बाह्यत्वे सति अस्मदादि अपरोक्षयी विपयत्वात्, घटादिवत्। नात्र हेतु. असिद्ध :। परिशेपन्यायात् तत्सिद्धेः। तथाहि न तावत् आगमकी नभ इति प्रतीतिः। तद-नभिज्ञानामपि तत् संभवात्। नाप्यानुमानकी। अनुमाननिरपेक्षे-णैवाबालन्नभ इति प्रतीतेः। अतः परिशेपात् प्रत्यक्षको गगन-प्रतीति. अभ्युपेया।

ननु रूपशून्यत्वात् नभसः कथ चाक्षुषत्वमिति चेत्, रूपवतां वा कथं चाक्षुपत्वमुपलभसिद्धे: योग्यतयेति चेत्, तुल्यम्। न च उद्भूतरूपस्येव चाक्षुपयोग्यत्वात्। तदभावात्, नभस: कथं चाक्षुपत्वमिति वाच्यम्। रूपरूपत्वघटत्वादीना रूपवत्वयोग्यता-विरहात् अचाक्षुषत्वप्रसगात्। यदि तत्र रूपवत्वतद्वृत्तित्व रूप-समानाधिकरणत्वादिकमपि चाक्षुपयोग्यता इत्यङ्गीक्रियते। तर्हि आकाशेऽपि चाक्षुपोपलभात् अन्यथानुपपत्त्या किञ्चित् योग्यता-कल्पना प्रसक्तौ रूपवत् मिशिरतत्वस्य योग्यतात्वकल्पनात्। न च ईश्वरस्यापि चाक्षुपत्वप्रसग.। रूपवत् मिशिरितत्वस्य सत्वात् इति वाच्यम्। रूपसमानाधिकरणत्वस्य गुरुत्वादौ सत्वेपि यथा गुरुत्वस्य न चाक्षुपत्वं तथा ईश्वरस्यापि अचाक्षुषत्वसंभवात्। अण्डान्तर्वर्ति नभसः पञ्चीकारेण रूपवत्वसंभवाच्च।

ननु नभसि स्वतो नैल्याभावात्, पञ्चीकृतेऽप्यस्मिन्नैल्यस्य पार्थिवांशमात्रनिष्ठत्वात्, तस्मिन्नेवांशेऽसौ चाक्षुषधीः स्यात्। मैवम्। तस्य नभश्शब्दार्थत्वायोगेन नभ इत्युल्लेखासभवात्।

नीलपटादिन्यायेन पार्थिवसंसर्गात् नैल्यप्रतीतेः ग्राह्यत्वात्। अत्र इदं बोध्यम्।

नीलपटन्यायनिरूपणम् :—

कार्पासविकारभूतः पटः स्वतो नीलः। अथ च नील—द्रव्यसंबधात् नीलस्सनीलः पट इति व्यवह्रियते। स च मुख्यः। न च नीलः पट इति प्रतीतिः भ्रान्तिरिति वाच्यम्। उत्तरकालेन नीलः पट इति बाधादर्शनात्। नीलद्रव्यघटितसंघातस्यैव नीलपटत्वात्। तत्संघातघटकनीली द्रव्यवृत्तित्वात् नैल्यस्य तदादाय 'नीलः पट' इति धियो यथार्थ च। एव पृथिव्यादिपञ्च—भूतस्यैव नभ पदार्थत्वात् तद्घटकपृथिव्याः नैल्यस्य सत्वात्। तदादाय 'नीलन्नभः' इति प्रतीतेः याथार्थ्यम्। तेन प्रत्यक्षत्व च नभसः अन्यदीयरूपेण तत्समृष्टद्रव्यप्रत्यक्षत्वस्य नीलघट सुवर्ण-वह्न्यादौ दर्शनात्। अयमेव नीलपटन्यायः।

न च वायोरपि पञ्चीकरणेन रूपवत्त्वाच्चाक्षुषत्वं स्यादिति वाच्यम्। तस्य रूपवत्त्वेऽपि उद्भूतरूपवत्त्वाभावात्। उद्भूतत्वस्य फलबलकल्प्यत्वात्। अत 'आकाश पश्यतोति' प्रतीतिः अङ्गुलीनिर्देशपूर्वकाकाशव्यवहारश्च संगच्छते।

ननु आनुमानिकाकाशविषयः तद्व्यवहारः। अनुमानञ्च शब्दः क्वचिदाश्रितः गुणत्वात् रूपवदिति तेन च इतरेषां बाधात् आकाशसिद्धिरिति चेन्न। शब्दस्य भेर्यादिधर्मत्वे तदुत्पादकवायु—

धर्मत्वे वा बाधकाभावेन तदाश्रयत्वेन गगनासिद्धेः। न च शब्दस्य वायुगुणत्वे स्पर्शवत् स्पार्शनप्रत्यक्षं स्यादिति वाच्यम्। एकभूतगुणस्यैव गंधरसरूपादेः भिन्नाक्षग्राह्यत्वस्य दृष्टत्वात् एवं बाधकान्तरमपि दूष्यम्। अतः आकाशः प्रत्यक्षसिद्धः। आकाशात् स्पर्शतन्मात्रमुत्पद्यते। ततो वायुः।

वायुलक्षणम् :—

विशिष्टस्पर्शवत्वे सति उद्भूतरूपशून्यत्वं वायोः लक्षणम्। समष्टिवायोः रूपशून्यत्वात् दृष्टिवायोः रूपवत्वेऽपि उद्भूतरूपाभावात् प्रत्यक्षस्पर्शाश्रयत्वाच्च लक्षणसमन्वयः।

समष्टिगगने प्रकृत्यादौ चातिव्याप्तिवारणाय विशेषणदलम्। तावन्मात्रोक्तौ वह्निजलादावतिव्याप्तिः। अतः विशेष्यदलम्। स्पर्शतन्मात्रेऽतिव्याप्तिवारणाय विशिष्टेति। व्यष्टिवायावव्याप्तिवारणाय उद्भूतेति। तस्य पञ्चीकरणेन रूपवत्वेऽपि उद्भूतरूपवत्वे रूपाभावात् नाव्याप्तिः। नचैवं ग्रीष्मोष्मणि भर्जनकपालस्थवह्नौ चातिव्याप्तिरिति वाच्यम्। तयोरपि उद्भूतरूपवत्वेन अतिव्याप्त्यभावात्। न च उद्भूतरूपवत्वे चाक्षुषत्वं स्यादिति वाच्यम्। उद्भूतरूपवत्वेऽपि पार्श्वस्थतमोरूपपार्थिवरूपाभ्यामभिभावात्। उद्भूतानभिभूतरूपवत एव चाक्षुषत्वात्। अथवा समष्टिवायोरेव निरूपणीयत्वात्, तस्य सामान्यतो रूपशून्यत्वात् विशेष्यदले उद्भूतपदं न देयमेव। एवम् अस्मदादिस्पर्शनैकेन्द्रियग्राह्यद्रव्यत्वमपि तल्लक्षणम्। मुक्तेन्द्रियाणां विषयनिशमाभावात्

असंभववारणाय अस्मदादीति। पृथिव्यादौ अतिव्याप्तिवारणाय एकेति। स्पर्शे अतिव्याप्तिवारणाय द्रव्यत्वम्। सचायं वायुस्पार्शनेन्द्रियेण गृह्यते। त्वगिन्द्रियपवनसंयोगे सति सावधानस्य वातो वातीति प्रत्यक्षेण वायोः क्षित्यादिवत् उपलंभात्। यदि त्वगिन्द्रियवायुसयोगे तदीयस्पर्शः साक्षात् क्रियते।

ततः तेन वायु अनुमीयते इत्युच्येत, तर्हि क्षितिसलिलतेजसामपि स्पार्शनग्राह्यत्वं न स्यात्। तत्रापि स्पर्शनानुमेयत्वस्य वक्तुं शक्यत्वात्। उपलंभस्य समत्वात् इष्टमिति चेत्, दर्शनस्पर्शनाभ्याम् एकार्थग्रहणाभावे द्रव्यापत्त्वप्रसंगात्। तथापि निरूपस्य वायोः कथं प्रत्यक्षत्वमिति चेत्, आत्मानं पश्य। कथं बाह्याक्षरग्राह्यत्वमिति चेत्, रूपादीन् निरूपय। रूपशून्यस्य वायोः दर्शनायोग्यत्ववत् स्पार्शनायोग्यत्वमपीति चेन्न। उद्भूतस्पर्शस्यैव स्पार्शनयोग्यत्वेन तत्र तत्सत्वात् तदिन्द्रिययोग्यताया एव तदिन्द्रियग्राह्यतायां नियामकत्वाभ्युपगमात्। अन्यथा त्वगिन्द्रियायोग्यप्रभायाः चाक्षुषत्वमपि न स्यात्। किञ्च अन्येन्द्रियग्राह्यगुणविरहस्य अन्येन्द्रियग्राह्यत्वप्रयोजकत्वे घ्राणग्राह्यगन्धशून्यस्य रसनग्राह्य रसशून्यस्य चानलस्य दर्शनस्पर्शनाभ्या ग्रहणं न स्यात्। द्रव्यग्राहकेन्द्रियेष्वेव अयं नियमः इति चेन्न। मनोग्राह्यज्ञानशून्यस्य घटादेः दर्शनस्पर्शनाभ्यां ग्रहणं न स्यात्। द्रव्यग्राहकबाह्येन्द्रियेषु अयं नियमः इति चेन्न। उपलंभविरोधेन तादृशनियमासिद्धेः। सिद्धौ च द्रव्यग्राहि स्पर्शनग्राह्यगुणविरहिण्याः प्रभायाः चाक्षुषोपलंभेन व्यभिचारस्य उक्तत्वाच्च। यदि बहिर्द्रव्यप्रत्यक्षं प्रति

उद्भूतरूपस्य स्पर्शस्य च द्वयोः हेतुत्वे गौरवात् प्रभाया प्रत्यक्षत्वाच्च लाघवात् भूतरूपस्यैव हेतुत्वं ग्राह्यम्। तदभावात् वायोः अप्रत्यक्षमिति ब्रूयात्। तदवायोः प्रत्यक्षत्वात् लाघवात् उद्भूतस्पर्शस्यैव बहिर्द्रव्यप्रत्यक्षत्वमङ्गीकृत्य, प्रभायाः अप्रत्यक्षत्वे इष्टापत्तिरिति धाष्ट्र्यं न प्रतिब्रूयात्। अतः यथोपलंभं वायोः स्पर्शनग्राह्यत्वमावश्यकम्। तस्य च वायोः स्वभावात् वा अष्टात्मकेश्वरसंकल्पाद्वा स्वारसिकं तिर्यग्गमनम्। पार्थिवादिद्रव्येण वाय्वन्तरेण वा अभिगनवशात् भ्रमणोर्ध्वगमनादयः जायन्ते। ते च दूरस्थितेन तृणादीनां भ्रमणोर्ध्वगमनादिभि अनुमीयन्ते। तत्त्येन तु स्पर्शने न ग्राह्यन्ते। एतेन वायोः नानात्वमपि सिद्धम्।

वायुविभागः :—

अस्य सर्वतः पार्थिवजलाद्युपरोधे सति स्तंभः। कस्मिश्च सलिलातपकुसुमादिसंबंधात् शीतोष्णसौरभप्रतीतिः। अयं च त्वगिन्द्रियाप्यायनेन प्राणशरीरविषयात्मना च उपकरोति। तत्र शरीरधारणादिहेतुः वायुविशेषः प्राणः। स एक एव व्यापारभेदात् पचधा दशधा चोच्यते। प्राणोऽपानव्यानोदानसमान भेदात् पञ्चधा। नागकूर्मकृकरदेवदत्त धनञ्जयाख्यो दशधा।

श्लो॥ प्राणोऽपानस्समानश्च
उदानो व्यान एव च।
नागश्च कूर्मः कृकरो
देवदत्तो धनञ्जयः॥

चरन्ति दशनाडीषु
दशप्राणो दयोऽथवा।
तुदन्तस्थ जलमन्नञ्च
रसादि च समीकृतम्॥ इत्युपक्रम्य

उद्गरादि क्रियो नागः
कूर्मोऽक्ष्यादि निमीलनम्।
कृकरश्चक्षुधः कर्ता
दत्तो निद्रादिकर्मकृत्॥ इत्यादि

प्रमाणानि अत्रानुसन्धेयानि। अस्य पापिष्टतरमिव दृश्यत इत्यादि श्रुतिसिद्धम्। एवं जंगमशरीरवत् स्थावरशरीरेष्वपि प्राणोऽस्त्येव। मूलनिषिक्तसलिलादेर्ग्रहणात्। जलसेकाभावे विशीर्णत्वाच्च। अथापि पंचधावस्थानं परतंत्रेषु नास्ति। शिलाकाष्ठलोष्टादि-शरीरेषु प्राणसंबंधो नास्ति। स च वायुर्द्विविधः, शरीरविषय-भेदात्। एवं तेजोजलपृथिवीष्वप्ययं विभागो बोध्य.। वायुशरीरन्तु वायुलोकवृत्तीनां विषयश्चण्डानिलतालवृन्तपवनादिः।

तेजोनिरूपणम् :—

वायो रूपतन्मात्रम्। ततस्तेज उत्पद्यते। 'वायोरग्नि.' इत्यत्राग्निशब्द. तेजोमात्रपर.। 'तन्वग्नि' इति विशेषश्रुतस्याग्निशब्दस्य कथं तेजस्सामान्यपरत्वमिति चेत्न। छान्दोग्ये 'अन्नमसृजन्त' इत्यत्र श्रुतस्यान्नशब्दस्याधिकारत्वपेत्युक्त न्यायेन पृथिवीमात्रपरत्ववत् 'आकाशाद्वायु' वायोरग्निः 'अग्नेरापः' इति

भूताधिकारादग्निशब्दस्यापि तेजोरूपभूतपरत्वात्।

छान्दोग्ये 'तत्तेज ऐक्षत! बहुस्यां प्रजायेयेति,' 'तदपो सृजतेति' तेजोमात्रस्यैव जलप्रकृतित्वावेदनात्।

तैत्तिरीयके अपां प्रकृतौ प्रयुज्यमानस्याग्निशब्दस्य छान्दोग्यगततेजश्शब्दसमार्थकत्वस्य स्वीकर्तुमुचितत्वाच्च।

ननु पर्णतृणकाष्टादीनामेव भस्मधूमध्वजादिरूपेण परिणामदर्शनात् पर्णादीनां च पार्थिवत्वाङ्गीकृतेः प्रत्यक्षविरुद्धार्थप्रतिपादनासंभवात् 'वायोरग्निः' इत्यत्र अग्नेर्वायूपादानकत्वविवक्षानुपपन्ना। न च पर्णादिसंयुक्तैः अदृष्टोपनीतैः सूक्ष्मैः तेजोऽवयवैः ज्वालारंभ इति वाच्यम्। तथा कल्पनस्य गुरुत्वात्। न च विचित्रारंभासंभव एव कल्पक इति वाच्यम्। भस्मधूमाङ्गारादिषु विचित्रारंभकस्य दृष्टत्वात्। नचोष्णस्पर्शरहितेन पार्थिवांशेनोष्णस्पर्शवत् द्रव्यस्योत्पत्तिः कथमिति वाच्यम्?

पार्थिवारब्धदुरालभास्पर्शवत्। पर्णाद्यारब्धतेजसोऽपि विलक्षणस्पर्शोत्पत्तेः बाधकाभावात्। अतः सलिलस्य सहकारिभेदात् फेनतरंगबुद्बुदवत् पृथिव्या एवांशतो हुतवहादिपरिणाम इति सिद्धे 'वायोरग्निः' इति श्रुतिः निमित्तकारणत्वमात्रपरेति चेन्नैवम्।

वायोरिति पञ्चम्या हेतुमात्रसाधारण्येऽपि 'आत्मनः

आकाशः संभूतः' 'आकाशाद्वायुः' 'वायोरग्निः' इत्युपादानप्राप्य-पाठानुगृहीत 'वायोरग्निः' इति श्रुतिः अन्यथासिद्धत्वात् उपादान-परा।

लयप्रकरणे 'पृथिव्यप्सु प्रलीयते' 'आपस्तेजसि लीयन्ते' 'तेजो वायौलीयत' इति लयप्रक्रमप्रतिपादनेन च निमित्तकारणे लयासंभवादुच्च तादशश्रुतेः उपादानपरत्वमेवेति निश्चीयते। पर्ण-तृणादीनामपि पांचभौतिकत्वस्य वक्ष्यमाणत्वात्। तदन्तर्गततेजो-भागैः तेजसः उत्पत्तेरिष्टत्वात्। ज्वालानिर्वापणानंतरं सतामेव तदवयवानामनुपलंभे बाधकाभावेन कल्पनागौरवानवकाशात्। एवमबिन्धबडबानलेऽपि असंसृष्टतेजोऽवयवैरेव तेजसः उत्पत्तिः। अन्यथाऽनियतोपादानकत्वप्रसंगात्।

स्मरन्ति च महर्षयः 'दारुण्यग्निर्यथा तैलं तिले तद्वदसौ पुमान्' इत्यतः समष्टिसृष्टावुपादातभूतात् वायोरेवाग्नेः उत्पत्तिः उपपन्ना। व्यष्टौ तु सूक्ष्मतेजसः स्थूलतेजसः उत्पत्तिरिति सर्वमुप-पन्नम्।

तेजोलक्षणं विभागश्च :—

उष्णस्पर्शवत् भास्वररूपवत्वादिकं तेजसः लक्षणम्, तच्च वाक्चक्षुषोः आप्यायकं तेजोमयी वाक्। 'आदित्यश्चक्षुषी भूत्वाऽ-क्षिणी प्राविशत्, रश्मिभिरेषोऽस्मिन् प्रतिष्ठित' इत्यादि श्रुतेः वैश्वानराद्यात्मना च तदुपकारः। वैश्वानरश्च शरीरान्तर्वृत्तिः

पीतभुक्तपरिपाकादिहेतुः तेजो विशेषः। तेजः प्रचुरदेशे तेजश्शरीरं प्रसिद्धम्। चन्द्रिकातपहुतवहादिः विषयविशेषः। हुतवहस्य ज्वालात्मकस्य दाह्यनाशेन नाशदर्शनात्। दीपस्यापि तथात्वेन पुष्कलकारणक्रमसन्निपाते एकदानेकदीपोदर्शनादाशुविनाशिस्वरूप-क्षणिकत्वं तस्य स्वीकार्यम्। 'सोऽयं दीप' इति प्रत्यभिज्ञा तु निष्क्रान्तप्रविष्टस्य निष्क्रमणदशा निर्वापितारोपितदीपादिषु अन्यथा सिद्धा सती न स्थैर्यसाधिका। अबाधितानन्यथासिद्धाया एव प्रत्यभिज्ञायाः विषयसाधकत्वात्। तेजः पुनः सामान्यतो द्विविधम् प्रभा प्रभावच्चेति।

तत्रावरणसद्भावाधीनसंकोचविकासवान् वेगशक्त्याद्यनुगुणस्वाश्रयाधिकदेशप्रसारि तेजोविशेषः प्रभा। सा च प्रभावता सहोत्पद्यते। तदपृथक्सिद्ध विशेषणाच्च अन्वयव्यतिरेकाभ्यां तथैवोपलभात्। न च प्रभा प्रभावतो रूपादिवद्गुणः रूपवत्तयोपलंभात्। स्वाश्रयादन्यवृत्तित्वात्। संयोगित्वाच्च द्रव्यमेव। द्रव्यान्तर-प्रकाशहेतुभूतभास्वररूपवत्वात् तेजो विशेषः। औष्ण्यं च प्रदेश-भेदेन प्रतीयते। तस्याः गुणत्वव्यवहारः नित्यः तदाश्रयत्व, तच्छेषत्वनिबन्धनः। अस्याश्च मूलाग्रयोः घनत्वनिरलत्वादयो यथादर्शन ग्राह्याः। अतः तेजोद्रव्यमेव प्रभाप्रभावदपृथक्सिद्धविशेषणत्वेनावतिष्टत इति सिद्धम्। न च विशीर्णस्यावयवा एव प्रभा। नातिरिक्तद्रव्यमिति वाच्यम। ऊर्ध्वगमनस्वभावानां तेजसां वाताद्यभिघातादर्शने युगपद्विष्वग्गमनादिकल्पनस्य गुरुत्वात्। प्रभा-

यास्तु यथोपलंभं तथाभ्युपगमात्। किञ्च स्थिरतरेषु प्रभावत्सु मणिद्युमणीप्रभृतिषु अवयवानां विशरणाभ्युपगमे तेषां नाशप्रसङ्गः। नचेष्टापत्तिः। 'सोऽयं मणिः' इति प्रत्यभिज्ञायाः भ्रान्तिरिति वाच्यम्। मण्यादेर्विशरणे सिद्धे प्रत्भिज्ञायाः भ्रान्तित्वसिद्धिः। भ्रान्तित्वसिद्धौ विशरणसिद्धिः इत्यन्योन्याश्रयणात्। दीपादौ तु ज्वालात्मकस्य वह्न्यादेः दाह्यनाशे नाशनियमात् वर्तिकाद्यवयवनाशेन प्रत्यक्षसिद्धेन ज्वालाभेदानुमाने सति निर्वापितारोपितदीपादाविव 'सोऽयं दीप' इति प्रत्यभिज्ञाया सादृश्यनिबन्धनत्वेन ऐक्यसाधकत्वाभावेन भ्रान्तित्वं संभवतीति वैषम्यात्। न च विशीर्णगंधाश्रयचंपकादिकुसुमवदंशतो विशरणेऽपि मण्यादौ भ्रमात्मकं प्रत्यभिज्ञानमिति वाच्यम्। अन्योन्याश्रयात् भ्रान्तित्वं न संभवतीत्युक्तत्वात्। न चैवं चपककुसुमादौ। तत्र गंधवद्गमनहेतुवाय्वनुगत्यनुसारेण गंधोपलंभादन्यत्रानुपलंभात्। चपककुसुमनाशानन्तरमपि तद्देशगंधोपलंभाच्च विशीर्णगंधावयवावश्यकत्वेनान्योन्याश्रयभावात्। एवं ग्रीष्मनिशादावौष्ण्योपलंभेन औष्णस्यापि विशीर्ण तेजोऽवयवातिरिक्त तेजो विशेष एव प्रभेति सिद्धम्। तद्विशिष्टतेज प्रभावत्। तद्द्युमणिदीपादि भेदेन बहुविधम्। सामग्रीविशेषाधीनस्वभाव भेदात् तेजसः शोकहर्षादिजनकत्वमनुभूयते हि। ग्रीष्मकालिकमध्याह्नार्कमहस्सशोकहेतुत्वम्। शरद्राकाचंद्रमस. हर्षहेतुत्वञ्च। ऊर्ध्वज्वलनमपि तत एव स्वभावाद्भोजकादृष्टवशात् वानस्य रोहित भास्वरैकस्वभावस्यापि सन्निनादिसमर्गभेदात वर्णवैचित्र्योपलंभ। एतच्च 'यदग्ने रोहितं

रूपम् इत्यादिश्रुतिसिद्धम्। वैशेषिकोक्तशुक्लत्वसाधकान्वय-व्यतिरेकौ श्रुतिविरोधात् अन्यथासिद्धौ। मध्याह्नमार्ताण्डमण्डल-श्वैत्योपलंभस्यापि मण्डलावष्टब्धानुद्भूतस्पर्शोद्भूतरूपसलिलांश-निबन्धनत्वोपपत्तेः। गुणानामुद्भावानुद्भावयोः फलबलकल्प्यत्वात्। अत्रायं संग्रहः —

श्लो॥ दाह्यनाशविनाशित्वा
दीपोष्वाशुविनाशिता।
कुसुमाश्रयनाशाच्च
शैथिल्याच्च कुसुमेष्वपि॥

'दाह्यनाशविनाशित्व
विशीर्णावयवत्वयोः।
अभावात् स्थिरताभीष्टा
मणिद्युमणितेजसोः॥

'दीपादिप्रत्यभिज्ञातः
भ्रान्तिरूपेतिगीयते।
सादृश्यालंबिनी नैव
विषयैक्यस्य साधिका॥'

मण्यादिप्रत्यभिज्ञा तु
विषयैक्यस्य साधिका।
अन्यथासिद्धिराहित्या
दबाधाच्च प्रमात्वतः॥'

'प्रत्यभिज्ञा यथार्थत्व
सिद्धौ शैथिल्यकल्पना।
मणेश्शैथिल्यक्लुप्तौ तु
तदभिज्ञा यथार्थता॥'

'अन्योन्याश्रयदोषाच्च
भ्रान्तित्वन्तु न संभवि।
अतोऽस्थिरं स्थिरं चेति
द्विविधं तेज इष्यते॥'

सुवर्णादीनां तेजस्त्वनिरासः :-

यत्तु सुवर्णरजतादेः तेजस्त्वमाहुः वैशेषिकाः। तन्न तेषां गुरुत्वादिना पार्थिवत्वात्। तथाहि हेमादि पार्थिवम्। जल भिन्नत्वे सति पार्थिवरूपसजातीयरूपवत्वात्। अभ्रकादिवत् जले व्यभिचारवारणाय जलभिन्नत्वे सतीति विशेषणम्। ताव-न्मात्रोक्तौ तेजसि व्यभिचारः। अतः विशेष्यम्। तेजसः भास्व-रूपवत्वेन पार्थिवरूपसजातीयरूपवत्वाभावात्। अभ्रकन्तु सुवर्ण सजातीयवर्णकम्। शुक्तिस्तु रजतसमानवर्णा। अतः सादृश्यात् अभ्रके सुवर्णारोपः। शुक्तौ रजतारोपः। एवं हेमादि पार्थिव काठिन्यवत्वात् शिलादिवत्। न च काठिन्य करकादौ व्यभिचरि तमिति वाच्यम्। स्वाभाविककाठिन्यस्य हेतुत्वेन करकादौ तद-भावात्। विलीने तस्मिन् काठिन्याभावात्। एवं सुवर्ण पार्थिव विलक्षणगुरुत्वाश्रयत्वात् शिलावत्। न च जलेऽपि गुरुत्वसत्वात्

व्यभिचार इति वाच्यम्। विलक्षणगुरुत्वस्य जले अभावात्। जलगुरुत्वं तत्समानपरिमाणजलान्तरवृत्तिगुरुत्वात् न्यूनाधिकभाव-विरहितम्। पृथिवी गुरुत्वं तु तत्समानपरिमाणपृथिवीगुरुत्वन्यू-नाधिकभावरूपतारतम्यवत्। इदमेव गुरुत्वानिष्टं वैलक्षण्यम्। अतः न व्यभिचारः। किञ्च सुवर्णादेः तेजस्संस्पृष्टत्वं साध्यते। उत तेजस्त्वम्? आद्ये पंचीकरणेन सर्वस्यापि तेजः ससृष्टत्वेन सिद्धसाधनात्। द्वितीये बाधः। गुरुत्वपीतिमादीनां तेजस्स्वभाव-व्याप्यत्वेन ताभ्यां तदभावनिश्चयात्। पंचीकरणेन तेजस्संसृष्ट-त्वेऽपि अभ्रकगुवत्यादिवत्पार्थिवांशः प्रभूत इति निश्चीयते। अन्यथा निष्कतुसत्यवचनं वाच्यम्। नापह्नुः कार्यः। अधिकदोपा-दित्यादि धर्मशास्त्रव्यवहारोऽसंगतस्स्यात्। तेजसो गुरुत्वाभावेन निष्कनिर्वचनानुपपत्तेः।

ननु सुवर्णस्य पार्थिवत्वे आयासा तैजसं शस्तम्। तैजसं शोधकैश्शुद्धम्। भुञ्जीततैजसे पात्रे तैजस नयतेग्राह्यम्। 'नय-तिस्तैजसपात्र' इत्यादि विधिनिषेधशास्त्रे तैजसशब्देन सुवर्णपात्रा-द्यभिधानं कथमिति चेन्न। तेजस्समानवर्णविशेपस्वतः शुद्धत्वा-भ्यां तथा प्रयोगस्य भाक्तत्वात्। अन्यथा सर्वात्मना तैजसत्वे प्रभादाविव निष्कादिव्यवहारप्रयोजकगुरुत्वाभावेन निष्केतुसत्य-वचनं वाच्यम्। माषमात्रप्रभृति निष्कपर्यन्तपरिमाणस्वर्णचौर्य-प्रायश्चित्त भेदविधायकशास्त्रं च दत्तजालाञ्जलिः स्यात्।

'ननु सर्पिर्जतु मधूच्छिष्टानां पार्थिवानाम अत्यन्तानल-

संयोगे लुप्तद्रवत्वं दृष्टम्। न तथा सुवर्णादौ अतस्तेषामलुप्तद्रवत्वादपार्थिवत्वमितिचेन्न, तोयान्यस्य दुस्साधत्वात्। यदि तोयस्यापिलुप्तद्रवत्वमत्यन्तानलसंयोगे द्रवत्वनाशादित्युच्येत, तर्हि सुवर्णभस्मादेः दृष्टत्वात् सुवर्णरूपनाशेन तस्यापि लुप्तद्रवत्वादलुप्तद्रवत्वं तस्मिन्नपि असिद्धमिति तुल्यम्। द्रवत्वविशेषेण तेजस्त्वसाधने तत्र न कश्चित् दृष्टान्तः। पाकजद्रवत्वेन पार्थिवत्वसाधने तु सर्पिर्जत्वाद्यस्माकं दृष्टान्तः। किञ्च त्वदुक्तरीत्या सुवर्णस्यानुच्छिद्यमानद्रवत्वाभ्युपगमेऽपि तस्य तेजस्त्वसाधकत्वं न सभवति। पीतिमगुरुत्वाश्रयसंप्रतिपन्नपार्थिवभागेऽपि तत्सत्वेन व्यभिचारात्। तदानीं पीतिमगुरुत्वाश्रये तादृशद्रवत्वानभ्युपगमे तत्र काठिन्यानुवृत्तिप्रसङ्गात्। तथा चालुप्तद्रवत्वस्य विपक्षे पार्थिवांशे पक्षे तेजसि च वृत्तित्वात् विरुद्धत्वम्। अत्रेद बोध्यम्। स्यन्दमानजलचूर्णसंहतिवत् पीतिमगुरुत्वाश्रयपार्थिवांशेऽलुप्तद्रवत्वानधिकरणत्वं न निश्चेतु शक्यते। चूर्णसंहतेः पृथगवस्थाने द्रवत्वाभावस्य प्रत्यक्षसिद्धत्वात्। पीतिमगुरुत्वाश्रयस्य तु पृथगवस्थानाभावात् द्रवत्वाभावानिश्चयेन द्रुतसुवर्णे तादृशांशस्यापि द्रवत्वप्रत्यक्षात् पीतिमाश्रयपार्थिवांशेऽपि तादृशद्रवत्व स्वीकर्तव्यमेव।

अतः तेन तेजस्त्वसाधनमनुपपन्नमेवेति। न चैवमपि पृथिवीत्वेन संप्रतिपन्नाज्यत्वादि व्यावृत्तद्रवत्वाधिकरणत्वात् सुवर्णस्य पृथिवीभेदः साध्य इति वाच्यम् पीतिमगुरुत्वादिभिः पृथिवीत्वे सिद्धे विलक्षणद्रवत्वस्य दर्शनानुगुण्यात् पृथिवीत्वेन संप्रति-

दुरालाभायां कण्डूतिजनकविलक्षणस्फर्शवत्तत् स्वीकारे बाधकाभावात् । तथा तेजस्त्वेन सप्रतिपन्न दीपादिविलक्षणानुच्छिद्यमानद्रवत्वाधिकारणत्वात् तेजो भेदस्यापि सुवर्णगाधने परिहाराभावाच्च ।

अतः यथा दर्शन नैमित्तिकद्रवत्वगुरुत्वाश्रयहेमादिपार्थिवमेवेति सिद्धम् । एतत्सर्वमभिप्रेत्याचार्यैरनुगृहीतम्-

श्लोक॥ अवान्तरविशेषाच्च
नातज्जातीयता भवेत्।
अतिप्रसगसाम्राज्या
दशेषापह्नवे न वा॥

न च हेमाद्रिशब्दानां
युक्तं दृष्टप्रमाणतः ।
आलोकव्यवहारार्हे
कुत्रचिद्वृत्तिकल्पनम्॥ इति

दृष्टप्रमाणत इति ल्यब्लोपे पंचमी। दृष्टप्रमाणं प्रत्यक्षप्रमाणं परित्यज्य लौकिकव्यवहारानर्हे कुत्रचिद्वस्तुनि शक्तिकल्पनम् अयुक्तमित्यर्थः।

जलनिरूपणम् :-

तत आपः । शीतस्पर्शवत्वं, निर्गन्धत्वे सति विशिष्ट-

रसवत्त्वमित्यादि तल्लक्षणम्। आसां शुक्लमधुरशीतस्पर्शगुणाः स्वाभाविकाः। नीलतिक्तोष्णादिगुणाः पृथिवीतेजस्संसर्गादारोपिताः। तत्तद्गुणव्यवस्थाश्चाद्रव्ये समर्थयिष्यन्ते। स्वाभाविकमासां द्रवत्वं आप्येप्यायने नोपकुर्वते। शरीरत्वमासामप्रचुरेषु वरुणलोकवृत्ति शरीरेषु प्रसिद्धम्। विषयत्वं सरित्समुद्रेषु। अद्भ्यो गन्धतन्मात्रम्।

पृथिवीनिरूपणम् :—

विशिष्टगन्धवत्त्व रसवत्त्वे सति विशिष्टानुष्णाशीतस्पर्शवत्त्वमित्यादि लक्षणम्। सा प्रथमं सुरभिमधुरकृष्णानुष्णाशीत—स्पर्शा जाता। अस्याश्च तेजस्सलिलसंबंधादौ पादिक एवौष्ण्य-शैत्योपलभः। कार्ष्ण्यं स्वाभाविकमिति श्रुतिसिद्धम्। पाकभेदात्तु विचित्रवर्णता। सुरभिस्वभाववत्त्वमपि औत्सर्गिकन्यायसिद्धम्। कारणस्य पयसो माधुर्यानुविधानञ्च बाधकाभावे ग्राह्यम्। तस्याः काठिन्येऽपि सलिलानपयोगात् क्वचित् द्रवत्वोपलभः। सगो घ्राणाप्यायनेन तस्या उपकार। शरीरत्वमस्याः मनुष्यतिर्यक्स्था-वरादिषु व्यक्तम्। विषयत्व मृत्पाषाणादिषु। यद्यपि विषयादि-रूपेण निर्दिष्टानां सर्वेषामपि तत्तज्जीवशरीरतया ईश्वरशरीर—त्वाच्चायं विभागोऽनुपपन्नः। तथापि लोकव्यवहारापेक्षया विभज्य निरूपितम्।

तमसः द्रव्यत्वनिरूपणम् :—

तमो द्रव्य पार्थिवञ्च। 'नीलं तमश्चलतीति' अबाधित-नीलादिप्रतीतिविषयत्वात् नीलघटवत्।

नन्विद्यमाने आलोके उत्पद्यमानायाः नीलादिप्रतीतेः अबाधितत्वं न संभवति। नीलादिप्रमा हेत्वालोकसंयोगाभावात् तथाचालोकविरहदशोत्पन्नाया 'नीलंतम' इति प्रतीतेः बाधितत्वेन विषयसाधकत्वाभावात् तमसः द्रव्यत्वं न सिद्ध्यतीति चेन्न। आलोकमन्तरेण जायमानायां तेजोविषयकप्रतीतौ बाधितत्वाभावेन व्यभिचारात्। तेजोविषयकचाक्षुषातिरिक्तत्वे सति आलोकाभावदशाया जायमान चाक्षुषत्वं बाधितत्वव्याप्तमिति चेत्, तथापि तेजोभावत्वेन भवदभिमततमश्चाक्षुषे आलोकाभावेऽपि जायमानेऽबाधितत्वस्वीकारात् व्यभिचारो दुर्वारः। यथालोकाभावेऽपि तमश्चाक्षुषजननात् तमसश्चक्षुर्योग्यतासिद्ध्यर्थमविरोधार्थं च तत्प्रत्यक्षेऽप्यालोकस्य न हेतुत्वम्।

योग्यता, च द्विविधा। स्वरूपयोग्यता, सहकारियोग्यता चेति। स्वरूपयोग्यत्वञ्च कारणतावच्छेदकावच्छिन्नत्वम्। सहकारियोग्यत्व इतरसामग्रीसाकल्यं वक्तव्यम्। ततश्च यदि तत् प्रत्यक्षे आलोकोऽपि सामग्र्यन्तर्गतः स्यात्। तथा आलोकाभावस्य कदाऽपि तत्समवधानासंभवाच्चाक्षुषत्वयोग्यता हीयते। प्रत्युतविरोधात् विषयस्यैवाभावः स्यात्। अतः तदुभयं माभूदित्यालोकस्यांधकारविषयकचाक्षुषेन हेतुत्वम् अभ्युपगमनीयमित्युच्यते। तथैव नीलत्वचलत्वद्रव्यत्वभावत्वाद्याकारेणोपलभ्यमानतमसः योग्यतासिद्ध्यर्थम् अविरोधार्थं च भास्वरूपतमसः प्रत्यक्षेऽपि आलोकस्य न हेतुत्वमिति आलोकाभावे जायमानाया 'नील तम' इत्यादि प्रतीतेः अबाधितत्वेन द्रव्यत्वसाधनसंभवात्। न च नीलघटादि-

चाक्षुषे आलोकसापेक्षत्वदर्शनात् अन्यत्रापि तत्सापेक्षत्वं स्यादिति वाच्यम्। स्वेदादिशैत्यग्रहे वायुसापेक्षस्य स्पर्शनेन्द्रियस्यौष्ण्यग्रहे तदभावसापेक्षत्वदर्शनात्।

ननु! तथाऽपि तमसः द्रव्यत्वेऽपि पार्थिवत्वं कुतस्सिद्धमिति चेन्न। नीलरूपत्वेन पार्थिवत्वसिद्धेः। तेजःपर्यन्तानां रूपशून्यत्वेन तेजसो भास्वररूपत्वात्। जलस्य शुक्लरूपत्वाच्च परिशेषन्यायेन पार्थिवत्वसिद्धेः। 'यत् कृष्णं तदन्ते स्यादिति' श्रुत्या पृथिव्या एव नीलरूपवत्त्वबोधनात्। न च नील-घटादिपृथिवीत आलोकापसार्यत्वालोकासहकृतचक्षुर्ग्राह्यत्ववैलक्षण्यात्तमसो न पार्थिवत्वमिति वाच्यम्। अवान्तरविशेषस्यातज्जातीयानियमत्वात्। अन्यथा अनुष्णाशीतपृथिवीतो विलक्षणस्य दुरालभौषधिविशेषस्य कण्डूतिजनकविलक्षणस्पर्शवतः पार्थिवत्वन्न स्यादित्युक्तत्वात्। अतः पार्थिवत्वं सिद्धम्। न च तमसः स्वतन्त्रद्रव्यत्वे आलोकगत्यागत्यनुविधानं कथमिति वाच्यम्? पृथक् द्रव्यस्यायसः अयस्कान्तगत्यागत्यनुविधानवत् तमसोऽपि तदुपपत्तेः। तत्तद्वस्तुस्वभावानां युक्तिबाध्यत्वायोगात्। अन्यथा वायुतेजःप्रभृतीनां तिर्यग्गमनोर्ध्वज्वलनादिभङ्गप्रसङ्गात्। न चैवमपि पार्थिवत्वरूपत्वयोः स्पर्शव्याप्यत्वेन तमसि स्पर्शाभावेन पार्थिवत्वरूपत्वयोरभावसिद्ध इति वाच्यम्। तत्रापि दीपप्रभायामिवानुद्भूतस्पर्शाङ्गीकारात् प्रभाया अपि निस्पर्शत्वमिति चेन्न। तेजस्त्वस्यौष्ण्यव्याप्यत्वेन प्रभाया औष्ण्याभावेन तेजस्त्वाभावप्रसङ्गात्। अतस्तस्यानुद्भूतस्पर्शवत्त्वमेष्टव्यम्। तद्वत्तमस्यापीति।

ननु तमो न रूपि द्रव्यमालोकासहकृतचक्षुर्ग्राह्यत्वात्। आलोकाभाववदित्यनुमानेन तमसो द्रव्यत्वाभावसिद्धिरिति चेन्न। आलोके द्रव्ये हेतोरसत्त्वेन व्यभिचारात्। आलोकभिन्नत्वे सतीति विशेषणेऽपि साञ्जनचक्षुर्ग्राह्यघटादिषु व्यभिचारः। आलोकसहकृतसाञ्जनचक्षुर्भिन्नचक्षुर्ग्राह्यत्वविवक्षणेऽपि तादृशयोगिचक्षुर्ग्राह्यघटादौ व्यभिचारतादवस्थ्यात्। योगिचक्षुर्भिन्नत्वस्यापि विशेषेण तादृशदिवान्धचक्षुर्ग्राह्यघटादौ व्यभिचारध्रौव्यम्। सर्वव्यभिचारस्थलभिन्नत्वविशेषणे आविष्कृतं तर्ककौशल्यम्। श्रुतिस्मृतयश्च तेजस इव तमसोऽपि सृष्टिप्रकरणे सृष्टिं लयप्रकरणे लयं शरीरत्वप्रतिपादकप्रकरणे शरीरत्वञ्च प्रतिपादयन्ति।

'तमस्ससर्ज भगवान् अक्षरं तमसि लीयते।

यस्य तमश्शरीरमित्याद्याः

नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्'

इति प्रलयकाले तेजसस्तमसश्च निषेध उक्तः। स च तमसस्तेजोभावरूपत्वेन घटते। भावाभावविधिवत्। भावाभावनिषेधस्यापि व्याहतत्वात् तमसस्तेजोभावरूपत्वमनुपपन्नम्। आरोपितनीलरूपं तम इति पक्षस्तु निरधिष्ठानभ्रमाभावान्निरस्तः। आलोकाभावरूपं तम इति पक्षस्तु नीलं तमश्चलतीति प्रत्यक्षविरोधादुपेक्ष्यः। अस्मिन् पक्षे बाधकान्तरं च। तथाहि आलोकाभावरूपतमसि नैल्यारोपस्य नैयत्यं न सम्भवति कालदेशभेदेन पुरुषदोषाणां विचित्रत्वात्। तथा च शौक्ल्याद्यारोपोऽपि कदाचित् स्यात्। न तथाऽऽरोप्यते। नन्वालोको हि भास्वरः तद्विरोधी च तदभावः।

कृष्णं च भास्वरान्यत्वात्। तथा चालोकविरोधित्वभास्वरान्यत्व-साम्यात् अकृष्णे कृष्णाध्यास इति चेत्। एवमपि रक्तपीतादी-नामपि तथात्वाविशेषात् तमसि तदारोपा किन्न स्युः। अतो न नैय्यत्यम्। न चारोपे सति निमित्तानुसरणम्। न तु निमित्तम-स्तीत्यारोप इति न सर्वारोपप्रसङ्ग इति वाच्यम्। आरोपे सती-त्यस्यासिद्धेः। बाधान्यथासिद्ध्यभावात्। अतिप्रसक्तस्य निमित्त-त्वानुसरणायोगाच्च। यथा रज्जौ सर्पाध्यासः तथा कदाचिदम्बु-धाराद्यध्यासोऽपि किं भवेत्? सामग्रीसत्वे कदाचिदपि कार्यानुत्पत्ति-वचनं लोकविरुद्धं युक्तिरहितञ्च। अदृष्टादिकं तत्र नियामकमिति चेत्। विचित्रादृष्टभेदविषमिते जगति सर्वजन्तुसाधारणस्यानु-परततावन्मात्रभ्रमहेतोरदृष्टविशेषस्य कल्पकाभावात्। अतस्तमो द्रव्यं पार्थिवं चेति सिद्धम्,

कालनिरूपणम् :—

त्रिगुणानन्तरं कालो निरूप्यते। अत्र वैशेषिकाः। अनि-यतदिगवस्थितयोर्युवस्थविरपिण्डयोः अयमस्मादल्पतरकाल-सम्बन्धी। अयस्मात् प्रचुरकालसम्बन्धी इत्यपेक्षाबुद्धिसहकृतेन कालपिण्डसम्बन्धेन यून्यपरत्वं स्थविरे च परत्वमुत्पद्यते। तत्र च भूयोऽल्पकालसम्बन्धो नाम भूयोऽल्पतपनपरिस्पन्दक्रियासम्बन्ध एव। कालाल्पभूयस्त्वयोस्तदुपाध्यल्पत्वभूयस्त्वरूपत्वात्। ततश्च तपनस्पन्दक्रियाया युवस्थविरपिण्डयोर्न साक्षात्सम्बन्धस्सम्भवति। अन्यदीयक्रियाया अन्यस्य साक्षात्सम्बन्धाभावात्। नापि संयुक्त—

समवायः। विप्रकृष्टतपनेन पिण्डस्य संयोगस्याप्यभावात्। अतस्तपनसंयुक्त द्रव्यसंयुक्तमेव पिण्डस्य सम्बन्ध इति वक्तव्यम्। तत्र च तपनपिण्डसंयुक्तमेकद्रव्यं सम्बन्धघटकमभ्युपेयम्। न च पृथिव्यादिकं तादृशम्। तस्योभयसंयुक्तत्वाभावात्। न च दिगेवोभयसंयुक्तासम्बन्धनियामिकेति वाच्यम्। तस्याः दैशिकपरत्वोपयोगिदिङ्मूर्तसंयोगमात्रोपनायकत्वेनैव सिद्धत्वात्। नाप्याकाशात्मानौ। तयोस्सम्बन्धघटकत्वेति प्रसङ्गात्। अत एव लीलावत्यामुक्तम् 'यदि च गगनात्मान्यधर्मेणान्यमवच्छिन्द्यात् तदा काशीस्थ पुरुषशरीरवर्तिना कुङ्कुमरागेण काश्मीरवर्तिकरतलमवच्छिन्द्यादिति'। न च कालोऽप्येष दोष इति वाच्यम्। तस्य तावन्मात्रोपनायकत्वेनैव सिद्ध्या धर्मान्तरोपनायकत्वाप्रसक्तेः। न चातप एव तपनपिण्डाभ्यां सयुक्तोभयसम्बन्धघटक इति वाच्यम्। पर्वतगुहान्तर्वर्ति पदार्थे पातालतलवर्तिनि वातस्याप्यभावात्। अतस्तपनपरिस्पन्दघटकत्वेन तदुपनायकः पदार्थः कालोऽभ्युपेय इति वदन्ति। तदसत्। तपनसंयुक्तातपसयुक्तभूमिसंयुक्तत्वपर्वतादिसयुक्तत्वादि परम्परया पाताळगुहान्तर्वर्तिष्वप्युपनायकत्वसम्भवेनातिरिक्तकालासिद्धेः। यदि तपनपिण्डाभ्यां संयुक्त एक एव पदार्थः लाघवात्तादृशसम्बन्धघटक इत्यभिलाषा। तर्ह्याकाश एवास्तु तस्योभयसम्प्रतिपन्नत्वात्। नन्वाकाशस्य तादृशसम्बन्धघटकत्वे सर्वस्य सर्वधर्मोपनायकत्वप्रसङ्गेन सर्वस्य जगतस्सर्वधर्मित्वप्रसङ्ग इति चेन्न। अतिरिक्तकालस्येव सिद्धस्याकाशस्यापि तपनपरिस्पन्दमात्रोपनायकत्वसिद्धेः। धर्मिकल्पनातो वरं धर्मकल्पनं लाघवात्।

किञ्च परत्वापरत्वाद्यनुमेयः काल इत्ययुक्तम्। भूयोऽल्पकालव्यतिरिक्तपरत्वापत्वाभावात्। ततश्च परत्वापरत्वयोः प्रत्यक्षत्वं वदता कालस्यापि प्रत्यक्षत्वमभ्युपेतमेवेति सिद्धम् कालस्य प्रत्यक्षत्वम्। तत्त्वविदस्तु प्रत्यक्षागमाभ्यां कालसिद्धिं वदन्ति। तथाहीदानीं घटो वर्तते क्षणिकोऽयं घट इत्यादिप्रतीतिषु कालविशिष्टघटादेर्भानाद्विशेषणीभूतकालस्यापि प्रत्यक्षत्वम्। न च रूपशून्यस्य प्रत्यक्षत्वन्न सम्भवतीति वाच्यम्। रूपवन्मिश्रितत्वेन प्रत्यक्षत्वसम्भवादित्युक्तम्। आगमश्च अनादिर्भगवान् कालः।

'कलामुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।
कालोऽस्मि लोकक्षयकृत् प्रवृद्धो...' इत्यादि।

नित्यविभूतावपि कालोऽस्त्येव। अथापि स च तत्रत्यपदार्थानान्न परिपाकहेतुः।

श्लो॥ कालं स पचते तत्र न कालस्तत्र वै प्रभुः।
कला मुहूर्तादिमयश्च कालः न यद्विभूतेः परिणामहेतुः।

इत्यादिवचनात्। अन्यथा 'सदा पश्यन्ति सूरयः' इत्यादिभिर्विरोधः। अस्य चान्वयव्यतिरेकागमैर्यथायोगं तत्तत्कार्यनिमित्तत्वं बोध्यम्। कालस्यैक्येऽप्युपाधिभेदादुपाध्यवच्छिन्नकालस्यान्वयव्यतिरेकौ बोध्यौ। अस्मिन् पक्षे क्षणकालवादिकालपरिणामव्यवहार उपाधिपरिणामप्रयुक्त इति बोध्यः. स्वरूपविकाराभ्युपगमपक्षे स्वविकारान् प्रत्युपादानत्वम्। कार्यान्तरं प्रति निमित्तत्वम्। विकारश्च क्षणरूप एव। क्षणाश्च सर्वव्यापिनः। तानादायैव घटिकमुहूर्ताहोरात्रादीन्–

पक्षमाससम्वत्सरादिव्यवहाराः प्रवर्तन्ते। अस्मिन् पक्षे

'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि,' कलामुहूर्ताः
काष्ठाश्चाहोरात्राश्च सर्वशः

इत्यादि श्रुतेः स्वारस्यम्। अत्र स्वारसिकार्थबाधकाभावादभिमानिदेवतोपाध्युत्पत्त्या निर्वाहस्तु विस्वरसः। विभोर्विकारित्वानुपपत्तिर्बाधिकेति चेन्न। अवयवोच्छूनतादिलक्षणस्य विकारस्यानभ्युपगमात्। अवस्थान्तरापत्तिमात्रस्याविरोधात्। अन्यथा विभोरेवासिद्धिप्रसङ्गात्। सर्वमूर्तसंयोगित्व हि विभुत्वम्। अतस्संयोगलक्षणविकारित्वमङ्गीकार्यम्। उत्तरपक्षद्वयेऽपि सर्वप्रत्ययाः कालोपश्लिष्टा एव दृश्यन्त इति कालप्रत्यक्षत्वम्। तदेवमव्यक्तोपक्रममहदहङ्कारेन्द्रियतन्मात्रभूतसृष्टिप्रकरणेषु जीवपरमात्मानौ पञ्चविंशकषष्ठविंशकौ भवतः। अक्षरतमसोरन्यतयोपक्रमे कालस्य पृथग्गणने च सप्तविंशकाष्टाविंशकत्वादिकं यथासम्भवमूह्यम्। श्रुतिश्च 'तं षड्विंशकमित्याहुस्सप्तविंशमथापरे इति। पञ्चविंशातिरिक्तनिषेधपराणान्निर्वाहस्तु

अन्यश्च राजन् सपरस्तथान्यः पञ्चविंशक ।
तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधव ॥

इति मोक्षधर्मे भगवता व्यासेनाभिहितः।

समष्टि व्यष्टि निरूपणम् :—

नन्वेवमपि तत्तदभूतेषु सत्तिनकाल हि ...

नराद्युत्तरोत्तरावस्थादर्शनात्। न त्वसङ्ख्यानियमोऽनुपपन्नः। नैवं समष्ट्यपेक्षया तन्नियमात्। पञ्चीकरणपश्चाद्भाविव्यष्ट्यवस्था-विशेषाणामानन्त्यादपरिसङ्ख्यानम्। एतेषु समष्टितत्त्वेष्वंशत एवोत्तरोत्तरतत्त्वसृष्टिर्न सर्वात्मना। पूर्वपूर्वतत्त्वैरुत्तरोत्तरतत्त्वेष्वा-वृतत्वस्य तत्तदाकारेण पूर्वपूर्वतत्त्वानां स्वकार्येषु वृत्तित्वस्य च श्रुतत्वात्।

श्लो॥ 'प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत्।
यथा प्रधानेन महान् महता स तथा वृतः॥
आकाशं शब्दतन्मात्रन्तु स्पर्शमात्रं समाविशत्॥

इत्यादि प्रमाणं अत्रानुसन्धेयम्। अन्यथा पृथिवीमात्रपरिशेषप्रस-ङ्गात्तन्मात्राणां तु आवारकत्वाभावान्निश्शेषपरिणाम इत्येके, शरीरादेश्चतुर्विंशतितत्त्वमयत्वप्रतिपादनवचनात्। तेषामप्येक-देशतः परिणाम इत्यपरे। पूर्वस्मिन् पक्षे शरीरादेश्चतुर्विंशतितत्त्व-मयत्वश्रुतिस्सर्वाचित्तत्त्वमयत्वप्रतिपादनपरेति द्रष्टव्यम्। अपर-स्मिन् पक्षे क्वचित् केषाञ्चित् सृष्ट्यनुक्तिवदविवक्षया वरणा-द्यनुक्तिरिति गतिः। एतानि तत्त्वानि प्रथममीश्वरसङ्कल्पादेव तत्तत्त्वाहितपूर्वतत्त्वशरीरक उत्तरोत्तरतत्त्वानि सृष्ट्वा व्यष्टि-नामरूपव्याकरणं सङ्कल्प्य तेषां तत्त्वानां पृथग्भूतानां व्यष्टिसृष्ट्य-समर्थानां परस्परसम्मिश्रणञ्च सङ्कल्प्य व्योम्नोऽर्धभागाच्चत्वारो न, पूर्वेन गोमयाग्नित्यादिक्रमेणैकैकभूतार्धांशेषु भूतान्तराणामष्ट-मांशानन्तरे पञ्चीकरणं कृत्वा तेषु स्वानुप्रविष्टजीववर्गमनुप्रवेश्य

तैरेव तत्त्वैर्दशगुणितोत्तरसप्तावरणवेष्टितं हेमाकारपरिणतभूतमयं ब्रह्माण्डमारभ्य तदन्तरे च स्वनाभिपङ्कजप्रभृतिसप्तस्थानेष्वन्यगोनाण्डान्तर्वर्तिसकलचेतनगर्भितविग्रह चतुर्मुखं प्रसादात् सृजति । क्रोधाच्च रुद्रम् । अत्र श्रुतिः

एको ह वै नारायण आसीन्न ब्रह्मा नेशान'

इत्यारभ्य तत्र ब्रह्मा चतुर्मुखो जायते। त्र्यक्षशूलपाणिः पुरुषो जायते' इत्यादिकम्। 'नारायणात् रुद्रो जायते' इत्यादयश्च उक्तश्च महाभारते—

'एतौ द्वौ विबुधश्रेष्ठ प्रसादक्रोधजौ स्मृतौ।
तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ॥
ब्रह्माणं शितिकण्ठञ्च याश्चान्या देवताः स्मृताः।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्॥ इति।

स च भगवाननन्तरं स्वसृष्टब्रह्मान्तर्यामिरूपेणावस्थितस्वप्रहितवेदोपज्ञविज्ञानेन स्वार्पिताभ्यां विचित्रसृष्टिविषयबुद्धिशक्तिभ्यामुपबृंहितेन स्वनिर्धूतमधुकैटभादिविविधापदा चतुर्मुखेन ब्रह्माण्डान्तर्वर्तिचतुर्दशभुवनतदधिकरणकदेवतिर्यङ्मनुष्यस्थावरतद्विशेषदिगादिविविधविचित्रव्यष्टिसञ्ज्ञामूर्तिसृष्टिं कारयति। करोति च तच्छरीरकः। संहारयति संहरति च हरशरीरकः।

दिशस्तत्वान्तरत्वनिराकरणम् :—

ननु नित्यविभोर्दिशः कार्यत्वं कथमिति चेन्न। दिगिति द्रव्यस्यैवासिद्धेः। प्राक् प्रत्यक् दूरासन्नादिव्यव-

हाराणामुभयसम्मतैस्तदुपाध्युपहितैस्तैराकाशादिद्रव्यैरेव वा यथा-योगन्निर्वाहात्। सम्प्रतिपन्नाकाशादिपरित्यागेन सर्वत्र सर्वगुण-घटनरूपातिप्रसङ्गपरिहारायाधिकदिक्धर्मिकल्पनं पापक्षयवत् पुण्य-क्षयोऽपि भवेदिति भयान्मन्दाकिनीमपहाय मरीचिकानुधावनम्। नन्वाकाशाद्यतिरिक्तं दिक्तत्त्वं स्वीकर्तव्यम्। पद्भ्यां भूमिर्दिशः श्रोत्रादिति चेन्न। अभिमानिदेवतोपाधिसृष्ट्या निर्वाहात्। तदेक-प्रकरणस्थान्तरिक्षस्वर्गादिसृष्टिवदुपपत्तेः। अन्यथाऽन्तरिक्षादेरपि तत्त्वान्तरत्वस्वीकारप्रसङ्गात्। किञ्च व्यष्टिदशायां हि दिक्सृष्टिः श्रूयते। अतोऽण्डबहिर्भूतेषु महदादिष्वावार्यत्वदूरत्वासन्नत्वव्यहाराः। त्रिगुणस्याधःप्रदेशत्वं शुद्धसत्त्वापेक्षया शुद्धसत्वस्य त्रिगुणापेक्षयो-र्ध्वत्वव्यवहाराश्च न घटेरन्। तत्रोपाधिभिरुपहितैर्वातैस्तैर्यथा निर्वाह्याः। तदत्रापि सममिति सिद्धम्, न दिक्तत्त्वान्तरमिति। ब्रह्माण्डप्रभृति स्तम्बपर्यन्तं सर्वमपि पञ्चभूतात्मक पञ्चीकरणादि-वचनात्। तासां त्रिवृत त्रिवृतमेकैका करवाणीत्युपलक्षणम्। समानप्रकरणे तैत्तरीयके आकाशादीना पञ्चानामप्युत्पत्तिश्रवणात् पञ्चीकरणमपि श्रुत्यभिप्रेतमिति गम्यते। ननु पञ्चीकरणेन व्यष्टि-तत्त्वाना सर्वेषा पञ्चभूतमयत्वादव्यवहारनियमः कथमिति चेन्न। यस्मिन् सङ्घाते यस्य भूतस्य भूयस्त्वं तत्सङ्घातः तद्भूतत्वेन व्यव-ह्रियते। एतदर्थमेव हि सम्मिश्रयणे तत्तद्भूतानामर्धांशं स्थाप-यित्वा इतरेषां भूतानामष्टांशैस्संयोजनं कृतम्। लौकिकाश्च व्रीह्या-दिराशीन् किञ्चित्किञ्चिच्छिलासैकतादियुक्तानपि व्रीह्यादेर्भूयस्त्वा-द्व्रीहिराशिरयं माषराशिरयमिति व्यवहरन्ति। अतो भूयोंशस्यैव

व्यवहारनियामकत्वान्न व्यवहारसाङ्कर्यम्। सम्मिश्रयणाभावे भूतानां तत्तत्कार्यासामर्थ्यञ्च भगवता पराशरेण प्रतिपादितम्–

श्लो।। नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना।
नाशक्नुवन् प्रजाः स्रष्टुं असमागम्य कृत्स्नशः।।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः।
एकसङ्घातलक्षास्तु सम्प्राप्यैक्यमशेषतः।।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते। इति।

नन्वेकस्यानेकद्रव्योपादानत्वे जातिसङ्करस्स्यात्। न स्यात्कारणादन्यस्य कार्यस्यावयविनोऽस्माभिरनभ्युपगमात्।

कारणातिरिक्तकार्यनिरासः :–

ननु न कारणात्कार्यस्यानन्यत्वं सम्भवति। विलक्षणबुद्धिबोध्यत्वात्कार्यस्य। न खलु तन्तुपटघटमृत्पिण्डादिषु कार्यकारणविषया बुद्धिरेकरूपा। शब्दभेदाच्च न हि तन्तवः पटा इत्युच्यन्ते पटो वा तन्तव इति। यद्यप्येकस्यैव शब्दभेदाः 'इन्द्रो मरुत्वान् सुन्दरः कुण्डलीत्यादौ' च वर्तते। तथापि पर्यायभिन्नो विशेष्यविशेषणभावानर्हश्च शब्दभेद इह विवक्षितः। स च घटपटसिंहव्याघ्रादिशब्दवत् स्ववाच्य भिन्द्यात्। कार्यभेदाच्च। न हि मृत्पिण्डेनोदकमाह्रियते। घटेन वा कुड्यन्निर्मीयते। कालभेदाच्च। पूर्वकालञ्च कारणम्, उत्तरकालञ्च कार्यं आकारभेदाच्च। पिण्डाकारं कारणं कार्यञ्च पृथबुध्नोदराकारं तथा सत्यामपि घटो नष्ट

इति व्यवह्रियतेऽयेव सङ्ख्याभेदाच्च। बहवस्तन्तव एकः पट इति। परिमाणभेदाच्च। कारकव्यापारवैयर्थ्याच्च। कारणमेव चेत्कार्यं किं कारकव्यापारसाध्यं स्यात्। सत्यपि कार्ये कार्योपयोगितया कारकव्यापारेण भवितव्यञ्चेत् कारकव्यापारोपरतिः कदापि न स्यात्। अतः कारणादन्यत्कार्यमवगव्यन्तरोकार्यमिति चेन्न। भवदभिमता समवायिकारणसंयोगरूपावस्थाविशेषविशिष्टैस्तन्त्वादिभिरेव पटादिव्यवहारोपपत्तावतिरिक्तावयविकल्पनस्याप्रामाणिकत्वाद्राशिसेनावनपत्रताटकान्दिष्ववयव्यभावेऽपि निरुक्तावस्थाभिरेव सर्वोपपत्तिर्भवताऽप्युपपादनीया। पत्रताटङ्कादावयवद्वयसंयोगरूपा समवायिकारणाभावेनावयव्यारम्भाभावात्। इतरथाऽऽकुञ्चनप्रसारणाभ्यां जलूककूर्मादिषु सङ्कोचविकासाभ्यां पद्मादिष्वाकुञ्चितप्रसारितपटादिष्वप्यवयव्यन्तरोत्पत्तिप्रसङ्गात्। न चेष्टापत्तिः। आरूढकार्यैरवयवैस्तवावयव्यन्तराभ्युपगमात्। अभ्युपगमे सप्रतिघत्वविरोधभङ्गप्रसङ्गात्। न च तत्र पूर्वावयविनो नाशः अवयव्यन्तरस्योत्पत्तिश्चाभ्युपगम्यत इति वाच्यम्। आरम्भकसंयोगस्याविनष्टत्वात्। अवयवान्तरसंयोगरूपासमवायिकारणाभावाच्च। न च दलसंयोगविरोधिविभागजनकक्रिययैवारम्भकसंयोगविरोधिविभागजननात् द्रव्यनाश इति वाच्यम्। द्रव्यनाशारम्भकसंयोगविरोधिविभागजनकक्रियाया द्रव्यारभकसंयोगविरोधिविभागजनकत्वात्। अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गादिति गुरुमतसिद्धान्तविरोधप्रसङ्गात्। किञ्चावयवातिरिक्तावयव्यभ्युपगमे गुरुभूतावयवद्वयद्वाया रब्धघटादौ कारणगुणप्रक्रमेणावयव-

गुरुत्वैरवयविन्यपि गुरुत्वोत्पत्तिरावश्यकी। तथा च द्विफलिकैक-फलिकान्यायेन कपालाद्यवयवगुरुत्वं घटाद्यवयविगुरुत्वञ्च सम्भूय घटद्वयोन्मान इव घटोन्माने पतनातिरेककार्योपलम्भप्रसङ्गः। नन्वन्यतरस्य प्रतिबन्धान्नाधिकगुरुत्वकार्योपलम्भ इति चेत्तत्र पृच्छामः। किमवयवगुरुत्वस्य प्रतिबन्धः, उतावयविगुरुत्वस्य निश्चलेऽवयविनि शाखापर्णफलादीनां पतनाभावप्रसङ्गात्। न चावयविगुरुत्वादेव तेषां पतनमिति वाच्यम्। सर्वेषां शाखापर्णादीनां युगपत्पतन-प्रसङ्गात्। सङ्घातवादिनस्तु यथार्हं प्रतिबन्धांश आलम्बनोपपत्तिः। नाप्यवयविगुरुत्वस्य द्व्यणुकप्रभृतेस्सर्वस्याप्यपतनप्रसङ्गात्। परमाणुगुरुत्वैरेव सर्वत्र पतने घटादेस्साक्षात्परमाण्वारब्धत्वाभावेन प्रत्यक्षसिद्धे तत्पतने गुरुत्वस्यासमवायित्वाभावप्रसङ्गेन गुरुत्व-लक्षणमसम्भवि स्यात्। किञ्च कार्यगुरुत्वादेव ह्यणुगुरुत्वं कल्पयसि। कार्याणामगुरुत्वेऽणौ कथं गुरुत्वम्? न कार्यगुरुत्वमुत्पाद्य कारणगुरुत्वं नश्यतीति वाच्यम्। अपसिद्धान्ताद्रूपादिष्वपि तत्प्रसङ्गात्। न चेष्टापत्तिः। पटाद्विभक्तानां तन्तूनामरूपित्वेनाचाक्षुषत्वप्रसङ्गात्। अगुरुत्वेनापतनप्रसङ्गाच्च। अतः कपालद्वय-तत्कार्यघटोन्माने घटद्वयोन्मानवद्गुरुत्वान्तरकार्यं दुस्त्यजम्। किञ्चावयवावयविनोर्द्वयोः स्पर्शवत्त्वात् सप्रतिघत्वविरोधः। तयोरन्यतरस्य स्पर्शशून्यत्वेन निरोधः। इह तूभयोः स्पर्शवत्त्वादेकावष्टब्धदेशे इतरावृत्तित्वलक्षणसप्रतिघत्वविरोधस्सम्भवत्येव। नन्ववयवावयविनोरेकत्र वृत्तित्वाभावान्न विरोध इति चेन्न। समवायिदेशैक्याभावेऽपि संयोगिदेशैक्यस्य सत्त्वात्। कपालावष्टब्धनभः प्रदेशे

घटस्यापि त्वया वृत्तित्वाभ्युपगमात्। ननु कपालसंयुक्तनभसि घटसंयोगो मा भूदिति चेन्न। मूर्तामूर्तसंयोगविलोपप्रसङ्गात्। तथाहि-मूर्तानां घटानामाकाशेन संयोगो वक्तव्यः। स च कपालावष्टब्धदेशावच्छेदेन न सम्भवति। अभ्युपगमात्। अन्यदेशावच्छेदेन त्वसम्भावितः। अतो घटादीनां द्व्यणुकपर्यन्तानां मूर्ताना स्वावयवावच्छेदेन गगने संयोगानभ्युपगमात् द्रव्यान्तरावच्छेदेनासम्भवाच्च। गगनादेस्सर्वमूर्तद्रव्यसंयोगित्वरूपविभुत्वन्न स्यात्। उक्तरीत्या मूर्तानां मूर्तैस्सह संयोगोऽपि न स्यात्। तत्राप्यवयवावष्टब्धदेशावच्छेदेनावयविनस्सयोगे सप्रतिघत्वविरोधात् देशान्तरावच्छेदेन तत्संयोगस्यासम्भावितत्वात्। यदि चावयव्यनुत्पत्तिदशायामवयवानां मूर्तैरमूर्तैस्सह संयोगोऽवयव्याधारत्वेऽवयवानां न संयोगः। तेषां तत्पारतन्त्र्यात्। एवञ्च विभुत्वमपि रक्षितम्। कालभेदेन सर्वमूर्तसंयोगादित्युच्येत तदा संयोगजसयोगो दत्तजलाञ्जलिस्स्यात्। हस्तस्य कायाधारत्वे पुस्तकेन सयोगाभावेन तज्जन्यकाय पुस्तकसंयोगासम्भवात्। अतस्सयोगिदेशेऽवयवावयविनोस्सप्रतिघत्वविरोधो दुष्परिहरः। एव स्वावयवेऽवयवि विभज्य यदा वर्तते तदैकावयवदर्शनेऽप्यवयव्युपलभ्यते। जातिरिव प्रत्याधारम्। अथाविभज्य वर्तते। तदानवस्थाप्रसङ्गः। तथा ह्यवयविनः स्वावयवेऽविभज्य वृत्तित्वमापूर्णवृत्तित्वम्। तच्चावयवमादायैव वक्तव्यम्। तत्रपूर्वावयववृत्तित्वायावयवान्तरस्वीकारे तस्मिन्नप्यवयविसम्बन्धस्य वक्तव्यतया तत्रापि पूर्वोक्तविकल्पे प्रथमकल्पस्य पूर्ववद्दूषितत्वेन द्वितीयकल्पपरिशेषे तत्रापूर्णवृत्तित्वोपपादनायाव-

यवान्तरस्वीकारे चानवस्थेति । न च बलवत्प्रमाणोपनीतावयविनि सम्प्रतिपन्नावृत्त्यनुपपत्तिस्संयोगादाविव शाम्यतीति चेन्न । प्रमाणप्राबल्यस्य निरस्तत्वात् । एवं पृथक्तरपटनिर्माणक्रमे द्वित्रितन्त्वादिसंयोगे द्वितन्तुकत्रितन्तुकादिपटपङ्क्तिरुत्पद्यते न वा । नो चेत् बुद्धिशब्दान्तरादिरवस्थाभेदेनेति सिद्ध स्यात् । उत्पद्यते चेत्त्रितन्तुकाद्यारम्भदशायां पूर्वं तिष्ठति वा न वा । पूर्वत्र तदनारम्भस्स्यात् । आरब्धकार्यैस्तदानीमेवावयव्यन्तरारम्भायोगात् । न च द्वितन्तुकपटादिस्तत्त्वान्तरसहितः त्रितन्तुकपटारम्भक इति युक्तम् । इह तन्तुषु पट इत्यादि स्वाभिमतव्यवहारविरोधात् । अत्राचार्योक्तसङ्ग्रहश्लोकौ—

'पूर्वसिद्धपटैस्सार्धं तन्तुभिः पटसम्भवे ।
पटपङ्क्तिरसागीक्ष्येत क्रमादाधिक्यशालिनी ॥
प्राक् सिद्धानां पटादीना उत्तरोत्तरजन्मनि ।
अहेतुको विनाशश्च स्थिरपक्षे न युज्यते ॥

न चेदुपलम्भविरुद्धनाशकल्पनाप्रसङ्गः । एवमेकद्वित्रादितन्त्वपकर्षणदशायामपि खण्डपटपरात्त्किनाशपरम्पराक्लृप्तिः क्लिष्टतरा । लाघवशालिनिसङ्घातमात्रपक्षे राशिन्यायादसौ दोषो न भवति । न च गौरवादतिरिक्तावयविपरित्यागे सौगतवत् स्वरूपविशेषणालम्ब्य संयोगविशेषोऽपि त्यजतामिति वाच्यम् । परसमवायितया स्वीकृतस्यावयवसंयोगस्य प्रत्यक्षसिद्धत्वेन तत्परित्यागानौचित्यात् । परेणापि हि विभूनामाकाशादीनां नित्यानां शब्दज्ञानसंयोगाद्य-

वस्थास्तत्तद्धेतुभेदैरङ्गीकृताः। सर्वद्रव्यस्वरूपानित्यत्वमवस्थाभेदमागन्तुकञ्च वदतामस्माकं किमनुपपन्नम्। संयुक्तावस्था हि परिणामः। कथं तर्हि नित्यानित्यविभाग इति चेत् इत्थं द्रव्यं नित्यमवस्थात्वनित्या। तथा च स्वरूपतो द्रव्यं नित्यमप्यवस्थाविशिष्टत्वेनानित्यमिति। नित्यानित्यविभागः।

ननु तन्तव एव व्यतिषङ्गविशेषविशिष्टाः पट इति भवतां सिद्धान्तः 'पटवच्चेति' सूत्रे दर्शितः। तथा च दीर्घैकतन्तुपरिवर्तनविशेषनिष्पादितेऽवयविनि कथं पटबुद्धिस्स्यादिति चेन्न। न वयं तन्तुगतमेकत्वं द्वित्वं वा पटधियो हेतुमिच्छामः। किन्तु व्यतिषङ्गविशिष्टतन्तोरेव पटधीहेतुत्वम्। तच्च यथादर्शनमनेकेषामिवैकस्यापीति तत्रापि पटधीहेतुत्वाभ्युपगमात्। एकस्यावयवस्यावयव्यनारम्भकत्वात्तत्रैव न तत्र पटधीबाधः। प्रदर्शितञ्च पत्रेण तादृङ्निष्पन्नावयव्यनारम्भकत्वम्। अतस्तत्रैवायं दोषः। स्यादेतत्।

नन्ववयव्यनभ्युपगमपक्षेऽन्त्यतः पर्वतादयोऽणुसङ्घाताः स्युरिति तेन प्रत्यक्षाः स्युः। अतस्सर्वाग्रहणमवयव्यसिद्धेरित्याक्षपादोक्तमनतिक्रमणीयम् स्यादिति चेन्न। प्रत्येकमप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वसम्भवात्। यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्। एकस्यापि केशस्यासक्तौ दर्शनयोग्यत्वमस्तीति चेत् त्रसरेणुरूपस्याणोरपि सहकारिसम्भवे प्रत्यक्षयोग्यतात्। तदतिरिक्ताणोर्निरस्तत्वात्।

नन्वेवमपि स्थूलोऽयं घट इति स्थूलत्वधीरणुसङ्घात-रूपघटादिषु कथं स्यात्? स्थूलद्रव्याभावाच्चाणुसंहतौ स्थूलत्वाध्यासस्यापि दुरुपपादत्वादिति चेन्न। स्थूलधीरिति परिमाणविशेषधीर्वा प्रत्यक्षयोग्यत्वधीर्वा प्रत्येकदेशाधिदेशत्वधीर्वा। नाद्यस्संहतेरेवावयविवत्परिमाणान्तरसृष्ट्युपपत्तेः। अणुष्वेव विरुद्धं स्थूलत्वं कथमिति चेदेकत्वाद्याश्रयेष्वेव कथं तद्विरुद्धं द्वित्वादिकमिच्छसि। अपेक्षाबुद्धिसङ्गृहीतव्यक्त्यन्तरसम्बन्धसामर्थ्यादिति चेत्तादृशबुद्ध्यनपेक्षकारणविशेषसम्बन्धादेव परिमाणान्तरमपीति तुल्यम्। न द्वितीयः। संहतौ प्रत्यक्षयोग्यत्वस्योपपादितत्वात्। न तृतीयः। मेषादिराशिषु महतिशयदेशतारतम्यदृष्टेः।

ननु न्यूनाधिकपरिमाणद्रव्यावच्छिन्नत्वेनैव न्यूनाधिकदेशत्वात्तत्परिमाणावयविद्रव्याभावे तत्प्रयुक्तदेशन्यूनाधिकत्वं दुर्निरूपं स्यादिति चेन्न। न ह्यवयविनिरूपणेनैव देशाधिक्यादिनिरूपणं सुरभित्वादेरिव सम्बन्धन्यूनाधिकभावेन तदुपपत्तेः। एतदुक्तं भवति। कर्पूरधूलिषु केतककुसुमादिषु वा सौरभ्यमाश्रयाल्पत्वाद्बहुत्वाभ्यां न्यूनाधिकभावेनोपलभ्यते। यथा च श्वेतपटे नीलीद्रव्यसम्बन्धान्नीलिमोत्पत्तौ नीलीद्रव्याधिक्यन्यूनताभ्यां नीलिम्नोऽप्याधिक्यन्यूनताप्रतीतिः। तथात्रापि संयुक्तद्रव्यन्यूनाधिकभावेऽवयव्यभावेऽपि न्यूनाधिकदेशतारतम्यं भवतीति। द्रव्येषु नैवमिति चेन्न। द्व्यणुकोत्पत्तेः पूर्वक्षणे संयुक्ताणुद्वयस्य प्रत्येकदेशाधिकदेशत्वावश्यम्भावात्। अन्यथा सर्वपरमाणूनां समानदेशत्वे प्रागुक्तदोषप्रसङ्गात्। समवायिनस्संयोगिनो वा देशस्याभावे कथं तत्र देशा-

धिक्यमिति चेन्न। आकाशाद्यशभेदेन तदुपपत्तेः। कथं निरवयवस्याकाशस्यांशभेद इति चेदात्मानं पृच्छ। कर्णशष्कुल्युपाध्यवच्छिन्ननभांसि नानाश्रोत्राणि कल्पयसि। भेर्यादिशब्देषु श्रूयमाणेषु तरङ्गवृत्त्या तत्तदन्तरदेशेषु शब्दोत्पत्तिं गगने साधयसि। न चाकाशादेरप्रत्यक्षत्वात्तदंशतारतम्यस्य दुर्ग्रहत्वात्तदधीनदेशाधिक्यं सुतरां दुर्ग्रहमिति वाच्यम्। प्रत्यक्षाकाशवादिनां दोषाभावात् त्वयाऽपि माषाद्यवयविनो महीधरसाधिक्यदेशत्वं गृह्यत इत्युच्यते। तत्रालोकगण्डलांशभेदैर्देशाधिक्यमिति चेन्न। आलोकस्यापि नभसि न्यूनाधिकदेशवृत्तित्वदृष्टेः परिमाणाधिक्यमात्रमेव पर्वतादिषु गृह्यत इति चेन्न। अगृह्यमाणं देशाधिक्यमस्ति वा न वा। अस्ति चेत् सङ्घातेऽपि कश्चोद्यावकाशः। न चेत्तद्देशेषु चक्षुःप्रसारादिनिरोधकत्वं न स्यात्। अन्यथाऽल्पदेशवर्तिनस्सर्वत्र निरोधकत्वप्रसङ्गात्। अतः परस्पराक्रान्तदेशावष्टम्भेन सह्यमानेषु त्रसरेणुषु सुग्रहमेव देशाधिक्यम्। देशस्तु आलोकाशादिर्वा य कश्चिद्यथायोग्यमस्तु। अत एवावयव्यभावादणुषु स्थौल्यारोपोऽपि न स्यादिति चोद्यमपि निरस्तम्।

ननु यदि संसृष्टास्तन्तव एव पटस्तदा तन्तुराशिमात्रेऽपि पटधीस्स्यादिति चेन्न। त्वयापि न तन्तुसंयोगमात्रं पटस्य समवायिकारणमिष्यते। तथा सति कुविन्दादिव्यापार वैयर्थ्यात्। अतो यादृशसंसर्गादवयवी तत्रोत्पद्यते तादृशसंसर्गविशिष्टास्तन्तवः पट इत्युच्यत इत्यतिप्रसङ्गाभावात्। एवं तन्तुमान् पट इति मत्वर्थीयप्रत्ययान्तसामानाधिकरण्यव्यवहारश्च 'शूरवती सेना' 'वृक्ष–

वदरण्यं' इत्यादि व्यवहारवत् प्रत्येकसमुदायभेदविवक्षयोपपन्नतरः।

नन्वेवमपि घटादीनां सङ्घातात्मकत्वे घटद्वयसंयोगे सति तस्याप्यवयवसंयोगरूपतया तयोरप्येकसङ्घातापत्त्या एकस्मिन् घट इव संयुक्ताविमौ द्वाविति च बुद्धिर्न स्यादिति चेन्न। संयोगविशेषेण पृथक् पृथक् सङ्घातकौत्पत्त्या तादृशसङ्घातद्वयसयोगे राशिद्वयसंयोगे इव संयुक्तौ द्वाविति च बुद्ध्युत्पत्तेर्बाधकाभावात्। अन्यथा राश्यादावपि तादृशबुद्धिर्न स्यात्। न च संयोगस्यैव घटावस्थारूपतया महत्त्वैकत्वद्वित्वसंयुक्तत्वादीनां संयोगविशेषरूपघटादिनिष्ठत्वाभावेन महान् घट इत्यादिविशेषणविशेष्यभावप्रतीतिर्न स्यादिति वाच्यम्। घटादिशब्दानां संयोगविशेषरूपावस्थावद्वाचकत्वेन महदादिशब्दानाञ्च महत्वादिमद्वाचकत्वेनैकार्थवृत्त्या सामानाधिकरण्यसम्भवेन 'महान् घट' इत्यादिविशेषणविशेष्यभावप्रतीते निर्बाधत्वात्।

अन्यथा 'घनं वनं' श्यामं वन इत्यादिप्रतीतिस्तवापि न स्यात्। तत्रावयव्यनभ्युपगमेन वृक्षबहुत्वातिरिक्तवनस्याभावेन घनत्वादीनां घननिष्ठत्वाभावादतो घनशब्दस्यावस्थावत्परत्वेनैवोक्तप्रतीते निर्वाह्यत्वेन तस्यान्यत्रापि समत्वात्। अत्रेदं बोध्यम्–घटकपालादिशब्दा घटत्वाद्यवस्थायां तदवस्थितद्रव्ये च प्रयुज्यन्ते। यथा शुक्लादिशब्दाश्शुक्लिम्नि तद्विशिष्टे च प्रयुज्यन्ते। तथा च 'एको महान् घट' इत्यादौ घटाद्यवस्थितम–

द्विशेषे संयोगमहत्त्वादीनां सत्त्वान्नीलो घट इतिवन्महान् घट इति समानाधिकरणप्रयोग उपपन्नः। एवं सेनादिशब्दा अप्यवस्था तद्विशिष्टवाचकाः। अतो घनं वनं श्यामं वनं इत्यादयोऽप्युपपन्ना इति।

ननु तथापि सितरक्तनीलादितन्त्वारब्धपटे 'चित्रः पट' इति धीस्सर्वेषां जायते। तन्तूनामेव पटत्वे प्रत्येकतन्तुव्यतिरेकेण चित्ररूपाधिकरणाभावेन 'चित्रः पट' इति धीर्न स्यात्। मम त्वयविनः पटस्य चित्ररूपाश्रयत्वाच्चित्रोपलब्धिर्जायतामिति चेन्न। व्यतिषङ्गवशेन पटावस्थापन्नसितरक्तनीलादितन्तुषु विद्यमाननानारूपसमुदायस्यैव चित्रधीव्यवहारविषयत्वे नानुपपत्त्यभावात्। चूर्णसंहतिचित्रवत् तत्र भवतोऽप्यवयव्यभावेनोक्तरीतेरनुसर्तव्यत्वात्। अतिरिक्तचित्ररूपासम्भवप्रकारद्रव्ये निरूपयिष्यामः। स्यादेतत्। तथा अवयव्यनभ्युपगमे एकावयवे धृते आकृष्टे चान्येषामवयवानां धारणमाकर्षणञ्च न स्यात्। दृश्यते च मूले धृते आकृष्टे चाग्रादीनान्धारणमाकर्षणञ्च। अवयव्यङ्गीकारे तु तस्यैक्यात् सर्वावयववृत्तित्वाच्च धारणाकर्षणे युज्येते। ततोऽवयव्यभ्युपगम आवश्यक इति चेन्मैवम्। धृताकृष्टावयवदृढसम्बन्धादेवावयवान्तराणामपि धारणाकर्षणसम्भवात्। अवयव्यभ्युपगमेऽपि कोमलवल्यादौ धारणाकर्षणयोरभावेन व्यभिचारात्। अवयवानां दृढतरसंयोग एव धारणाकर्षणप्रयोजक इति वक्तव्यम्। स च सङ्घातपक्षेऽपि तुल्यम्। किञ्च विजातीयेषु जतुसंयुक्तेषु तृणोपलकाष्ठादिषु पाशवेष्टितपश्वादिषु च धारणाकर्षणयोस्सत्त्वात् तत्रा-

बयव्यभावात्। तत्र सर्वत्रावयवानां तादृशदृढतरसंयोगस्यैव नियामकत्वे अन्यत्राप्यविशेषात्। किञ्च यत्तु पटादीनामन्त्यावयवित्वं तन्त्वादीनां मध्यमावयवित्वमिष्यते। तदप्यनुपपन्नम्। तथाहि तैरनेकैरविच्छिन्नावयवैरेकपटादिनिर्माणेऽवयव्यन्तरमुत्पद्यते न वा। आद्ये तेषामन्त्यन्तावयवित्वव्याघातः। द्वितीये तन्त्वादिभिरप्यवयव्यारम्भो न स्यात्। अविशेपात् तर्हि अन्यः कश्चित् पटादिरत्यन्तावयवी स्यादिति चेन्न। तैरपि कुण्ड्यपोतादिकार्यस्य सहकारिभेदैस्सम्भवात्। सन्ति चास्मदाशङ्क्य कार्यनिर्माणचतुराः केचिदन्तत ईश्वरश्च। एवं योऽसौ गोपुरादिरन्त्यावयवी। तत्र यदि कश्चित्सुधाभिरवयवान्तर सङ्घटयेत् । तदा पूर्वगोपुर तिष्ठति वा नश्यति वा। पूर्वत्र कथं तस्यान्त्यावयवित्वं उत्तरत्र स एवायमित्यनन्यथा सिद्धोपलम्भविरोधः। नाशकारणाभावेन नाशासम्भवात्। किञ्च क्वाचित्कावभेदमात्रात् पूर्वद्रव्यनिवृत्तिरवयव्यन्तरोत्पत्तिश्च यदि स्वीक्रियेत तदा महापृथिव्यादिभूतानामपि तत्तत्प्रदेशेष्वश्रान्तचण्डानिलैरविच्छिन्नजलधिमहोर्मिभिर्मदोन्मत्तैर्दिग्दन्तिभिर्भेदकैर्वाऽणुद्वयविघटने द्व्यणुकादिनाशक्रमेण तेषां प्रतिक्षणं नाशे सति पूर्वपूर्वद्रव्यनाशेन पुनर्द्रव्यान्तरोत्पत्तिपरम्परया च किञ्चिदपि वस्तु किञ्चित्कालमप्येकरूपन्न तिष्ठतीति बौद्धमतप्रवेशप्रसङ्गात्। अतो यथादर्शनं सर्वत्रावयवसङ्घातवाद एव साधीयन् यदप्यन्यत्कल्पनाजातं द्वाभ्यामेवाणुभ्यामाद्य कार्यद्रव्यमारभ्यते। एकस्यानारम्भाद्बहुभिराब्धत्वे महत्त्वप्रसङ्गेन द्व्यणुकस्य प्रत्यक्षत्वापातात्। एवं त्रिभिर्द्व्यणुकैस्त्र्यणुकमुत्पद्यते। तत्रावयवगतबहुत्वस-

ङ्ख्यया महत्त्वोत्पत्तिः। परमाणुपरिमाणस्यानारम्भकत्वम्। आरम्भकत्वे तु द्व्यणुकादेरणुतरत्वप्रसङ्गात्। तदीयद्वित्वसङ्ख्या ईश्वरापेक्षा बुद्धिजन्या। तद्विनाशकाभावेऽपि कार्यत्वादनित्या। अन्यत्रापेक्षाबुद्धिनाशेन द्वित्वादीनां नाशः। तादृशत्रसरेणुरप्रत्यक्षावयवकः रूपव्यतिरिक्ताप्रत्यक्षगुणकः प्रत्यक्षरूपकः उत्तरावयविनान्त्वनियतसङ्ख्याकावयवैरारम्भः। भावकार्यस्य सर्वस्य समवाय्यसमवायिनिमित्त कारणैरुत्पत्तिः। प्रध्वंसकार्यस्य निमित्तमात्रजन्यत्वमित्येतादृशं कल्पनाजातं विद्यावृद्धा न बहुमन्यन्ते।

## शरीरस्य एकभूतोपादानकत्वभङ्गः

एवं याचान्या कल्पना शरीरादिषु पृथिव्याद्यनेकभूतसद्भावेऽप्येकमेव भूतमुपादानमन्यत्संसर्गिमात्रं इति। तदप्यनुपपन्नम्। अवयविसद्भावे ह्येकमुपादानमिति नियन्तव्यम्। अवयविनो निरस्तत्वात्। सङ्घातवादे च यथादर्शन सर्वमुपादानम्। न च विजातीयानां संहतिर्नास्तीति वाच्यम्। दृष्टविरोधात्। युष्मत्सिद्धान्तविरोधाच्च। कथमन्यथा तेजस्त्वाभिमते काञ्चनादौ गुरुत्वपीतत्वकठिनत्वादिक्लृप्तिः पञ्चीकरणोपलक्षकत्रिवृत्करणश्रुत्या नामरूपव्याकरणप्रयोजनकथया चतुर्विधया ह्यारमयं शरीरमिति गर्भोपनिषदा च पञ्चभूतात्मकं वपुरिति स्मृत्या च देहस्य पञ्चभूतात्मकत्वमात्र प्रतिपाद्यते। न त्वेकस्योपादानत्वमितरेषां सांसर्गिकत्वम्। तस्मादविशेषात् सर्वमुपादानम्। न च जातिसङ्करस्यादिति वाच्यम्। अवयविनोऽभावेन सङ्घातघटकतत्तद्गवृत्ति-

त्वात्तत्तज्जातेरवयविनमुपगच्छतोऽपि प्रतिनियतकनकरजताद्यश-निर्मितबिम्बादिवन्नरसिंहादिवच्च निर्वोढुं शक्यत्वात्। न च जातिसाङ्कर्यं दोषः। उपाधिसाङ्कर्यं न दोष इत्यत्र नियामक-मस्ति। तथा च मूर्तत्वकार्यत्वयोः परस्परपरिहारेण मनसि रूपादौ च वर्तमानयोर्घटादौ समावेशेन साङ्कर्यात्। तथा च घटादेर्मूर्त-त्वकार्यत्वान्यतरस्य द्वयोर्वा परित्याज्यत्वं स्यात्। न च व्याप्य-व्यापकभावानापन्नजात्योरसमावेशनियमाभाव जातिसाङ्कर्ये दोष इति वाच्यम्। नीलत्वपीतत्वयोरप्युपाध्योस्तादृशयोरसमावेशो-पलम्भनियमदर्शनादुक्तदोषतौल्यात् शुक्लत्वमूर्तत्वयोस्समावेशदर्शनात् उपाध्योरसमावेशनियमो नास्तीति चेत् तुल्यम्। यदि काञ्चनत्वकु-ण्डलत्वयोरन्यतरस्य जातित्वं परित्यज्यते। अथवा काञ्चनकुण्डलगत कुण्डलत्वजात्यपेक्षया रजतादिकुण्डलगतकुण्डलत्वजातिर्भिन्नैव। न चानुगतैकजात्यभावे कथमनुवृत्तकुण्डलशब्द प्रयोग इति शङ्क्यम्। सदृशशब्दस्थानवत्वात्सर्वकुण्डलादीनामित्युच्यते। तर्हि घटादीनां सुसदृशसंस्थानादेवानुगतव्यवहारोपपत्तौ जातेरेवासिद्धिप्रसङ्गात्।

तथा च वृद्धिमिच्छतो मूलहानिस्स्यादिति न्यायेन जाति-संरक्षणे प्रवृत्तेन जातिपरित्यागस्समर्थितस्स्यादतोऽत्यन्तविसजा-तीयदार्वायसशिलसुधानिर्मितशकटरथगोपुरादिवत् देहादिरपि वि-सजातीयभूतमय एवेति यथादर्शनं स्वीकर्तव्यम्। न चानेकभूतमयत्वे कथमेकभूतशब्दस्तदर्थक्रियाकारित्वनियमश्च स्यादिति वाच्यम्। तयोस्सङ्घातघटकभूतांशभूयस्त्वनिबन्धनत्वात्। तत्राप्यनारब्धका-वयविकेषु विसजातीयमाषादिराशिषु भूयसा व्यवहारो लोकसिद्ध

एवानुसर्तव्यः। तथाऽस्माभिस्सर्वत्रानुसर्तव्य इति न किञ्चिदपहो-
नम्। अत्र—

श्लोकः विभागादविभागाच्च भूतभौतिकभेदधीः।
सत्येव यदि वा द्रव्ये सिद्धसाध्यदशान्वयात्॥
एकत्वञ्च बहुत्वञ्च मृत्पिण्डकरकादिवत्।
समष्टिव्यष्टिनीत्यैव त्रिगुणे वदति श्रुतिः॥
ईदृक् सत्कार्यवादश्च वैदिकैः परिगृह्यते।
द्रव्यस्य पूर्वसिद्धस्य साध्यावस्था विशेषितः'

इत्यनुगृहीतमाचार्यैः। तदेवमनेकतत्त्वात्मकब्रह्माण्डादिव्यष्टिवि-
श्वमिति। एवं विधब्रह्मानन्त्यतदन्तर्वर्तिलोकविशेषलोकपालनिवा-
सादिभेदतत्तदवस्थानकालादयो ज्योतिषपुराणादिषु प्रपञ्चिता द्रष्ट-
व्याः। क्वचित् क्वचिद्विरोधे तात्पर्यभेदेन नेयः। एषा च प्रति-
नियतदेशकालस्वरूपफलभोगतारतम्यनिम्नोन्नतब्रह्मादिस्तम्बपर्यन्ता
विषमसृष्टिः स्वरूपानादेर्जीववर्गस्य प्रवाहानादिकर्म तारतम्यनि-
बन्धनेति नाकृताभ्यागमकृतविप्रणाशवैषम्यनैर्घृण्यादिप्रसङ्गः। जी-
वानामाप्रलयावस्थायिपक्षे स्फुटा एते दोषाः। एवं पुण्यपापतारत-
म्यात् केचित् द्युलोकप्रभृतिष्वुत्कृष्टशरीरेन्द्रियज्ञानशक्त्यादिमन्तः।
केचिच्च मिश्रकर्माणः पृथिव्यादिषु मिश्रमध्यमगुरुत्वादिमन्तः।

शरीरलक्षणं विस्तृतं परमतनिरासश्च :—

इह प्रसङ्गात्सामान्यतश्शरीरलक्षणमुच्यते। यस्य चेतनस्य

यदवस्थं द्रव्यं यावत्सत्तमसम्बन्धनार्हं स्वशक्ये नियन्तव्यस्वभावं तदवस्थं तस्य शरीरम्।

ननु धर्मभूतज्ञानेऽतिव्याप्तिः। तस्य सिद्धान्ते द्रव्यत्वात् यावत्सत्तं स्वाश्रयं प्रति नियन्तव्यस्वभावत्वादसम्बन्धानर्हत्वाच्चेति चेन्न। यस्य चेतनस्यैत्यत्र चैतन्यविशिष्टस्येत्यर्थात्। धर्मभूतज्ञानस्य विशेषणीभूतचैतन्यानियाम्यत्वात्। चैतन्यविशिष्टात्मा सम्बन्धानर्हत्वाभावाच्च। विशेषणविशेष्योभयासम्बन्धानर्हस्य हि विशिष्टासम्बन्धानर्हत्वं तदत्र नास्ति। चैतन्यस्य चैतन्याप्रवृत्तित्वात्। तदनियन्तव्यत्वाच्च। भस्मनावस्थितस्य तद्द्रव्यस्यासम्बन्धानर्हत्वाभावादव्याप्तिरतो यदवस्थमिति। क्रियादावतिव्याप्तिवारणाय द्रव्यमिति। परकायप्राणेन्द्रियकुठारादावतिव्याप्तिवारणाय यावत्सत्तमिति। परकायस्य प्रवेशात्पूर्वं प्राणेन्द्रियाणामण्डसृष्टेः पूर्वं शरीरवियोगानन्तरञ्च सत्त्वात् यावत्सत्तमसम्बन्धानर्हत्वाभावान्नातिव्याप्तिः। असम्भववारणाय स्वशक्य इति। न हि विहङ्गमसाध्यं विहाय सोद्गमन मानुषादिशरीरशक्यम्। न च तावता तेषामशरीरत्वम्। स्वशक्यत्वं चान्वयव्यतिरेकादिसमधिगतं यथासम्भवं ग्राह्यम्। अत एव शिलाकाष्ठघटपटादिषु जीवशरीरभूतेषु तदधीनत्वाभावादव्याप्तिचोद्यं परिहृतम्। तेष्वपि स्थावरादिवदतिसूक्ष्मस्य नियमनविशेषस्यास्मदादिभिर्दुर्ग्रहत्वात्। यद्यपि स्थावरेषु क्वचिदुन्मेषनिमेषादिकं दृश्यते। तथापि न तत्सार्वत्रिकम्। स्मरति च

'शिलाकाष्ठादिष्वपि स्वल्पतरञ्चैतन्यम्। अप्राणवत्सुखस्वल्पा-
सास्थावरेणु ततोऽधिकेति'।

न च शक्येऽपि क्वचिदनिश्चयानियमनाभावादव्याप्तिरिति वाच्यम्। तत्रापि नियन्तुं योग्यत्वसत्त्वान्नाव्याप्तिः। व्याध्यादिदशासु स्वशक्येऽपि अशक्यनियमनेषु मानुषादिशरीरेष्वव्याप्तिरथ स्वभावमिति। तेषामशक्यनियमनत्वस्यौपाधिकत्वात्। व्याध्यादिशान्तौ यथा-पूर्वन्नियन्तव्यस्वभावत्वसत्त्वान्नाव्याप्तिरिति ध्येयम्।

एव यस्य चेतनस्य यदवस्थद्रव्यमपृथक्सिद्धविशेषणं तत तस्य शरीरमिति वा लक्षणम्। यावत्सत्तमसम्बन्धनार्हत्वमपृथ-क्सिद्धत्वम्। आधेयत्वविधेयत्वविशेषत्वान्यपृथक्सिद्धेरवान्तरभेदा इह विवक्षिताः। दण्डादीनां शरीरत्वव्यवच्छेदायापृथक्सिद्धत्व शेषव्यावृत्तिस्स्फुटैव। ईश्वरतज्ज्ञानव्यतिरिक्तसमस्तद्रव्यं शरीर-मिति सामान्यलक्षणम्। पूर्वोक्तन्तु विशेषलक्षणमेवेति ध्येयम्। 'अन्ये तु चेष्टेन्द्रियार्थाश्रयश्शरीरमिति' सूत्रानुसारात्। अन्त्या-वयवित्वे सति भोगायतनत्वमिति शरीरस्य लक्षणत्रयमित्याहुः। तदसत्। तत्र चेष्टाशब्देन क्रियामात्रविवक्षाया घटरथादिष्वति-व्याप्तिर्व्यक्ता। प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियाविव-क्षायां प्रयत्नवदीश्वरसयोगासमवायिकारणकक्रियाश्रयेषु तच्छ-रीरतया तैरनभ्युपगतेष्वौत्पातिककम्पादिक्रियावत्सु महीपर्वतादि-ष्वतिव्याप्तिः। प्रयत्नवज्जीवेति विशेषणे प्राणादिष्वतिव्याप्तिः। बुद्धिपूर्वकप्रयत्नेति विशेषणेऽपि प्राणायामकालिकरेचकपूरकादि-क्रियावत्सु प्राणादिष्वतिव्याप्तिः। रेचकपूरकयोर्बुद्धिपूर्वकप्रयत्न-

वदात्मसंयोगासमवायिकारणकत्वात् वाय्वादेरत्यन्तावयवित्वाभावेनान्त्यावयवित्वविशेषणाभावान्नातिव्याप्तिरिति चेन्न। कस्तर्ह्यत्यन्तावयवी घटादिरिति चेन्न। तत्राप्यनेकघटपटादिभिर्भित्तिगन्धादिनिर्माणेनान्त्यावयवित्वासिद्धेः। तत्र भित्त्याद्यारम्भो नास्तीति चेत प्राणादिष्वारम्भो नास्तीति वक्तुं शक्यत्वात्।

तर्हि घटादयो मध्यमावयविनस्सन्त्विति चेन्न। अन्येपामपि मध्यमावयवित्वेनान्त्यावयवित्वस्याकाशकुसुमायमानत्वात् साधु तद्विशेषितं लक्षणम्। अन्त्यावयवित्वासिद्धयैव लक्षणान्तरे अपि दूषिते। किञ्च द्वितीयेन्द्रियाश्रयत्वञ्च नेन्द्रियसमवायित्वमिन्द्रियावयवस्यापि शरीरत्वापत्तेः शरीरे इन्द्रियसमवायित्वाभावेनासम्भवापत्तेश्च। इन्द्रियसंयोगित्वन्तु घटादावस्तीत्यतिव्याप्तम्। यावत्सत्तमिन्द्रियसंयोगित्वं विवक्षितमिति चेन्न। चक्षुरादीन्द्रियविरहिण्यव्याप्तिः। तत्र मात्रया चक्षुरादेरिन्द्रियान्तरस्य च सत्त्वान्नातिव्याप्तिरिति चेत्तथाप्यनिमेषचक्षुपि प्रेक्षमाणे पुरुषे तदातनोत्पन्नविनष्टबुद्बुदावतिव्याप्तेः। न चाद्यक्षणे निर्गुणत्वाद्बुद्बुदस्य यावत्सत्तमिन्द्रियसंयोगाभावेनातिव्याप्त्यनवकाश इति वाच्यम्। उक्तरीत्या शरीरादिष्वपि यावत्सत्तमिन्द्रियसंयोगाभावादसम्भवापत्तेः। नित्यमनःपक्षे आत्मनां विभुत्वाभ्युपगमाच्च यावत्सत्तमिन्द्रियसंयोगादात्मादिष्वतिव्याप्तिश्च। मृतशरीरेऽप्यपि तैश्शरीरत्वाभ्युपगमात्तत्राव्याप्तिश्च। इन्द्रियसंयुक्तकृत्स्नप्रदेशकं शरीरमिति चेन्न। शरीरान्तःप्रदेशे त्वगिन्द्रियासंयोगात्। तत्रापि त्वगिन्द्रिय-

सम्बन्धे जाठरजन्तूनां स्पर्शोपलम्भप्रसङ्गः। मानसोऽप्यणुत्वेनैक-देशसम्बन्धात्। तथाचासम्भवः। सर्वेन्द्रियावस्थितिदेशत्वं शरीरत्वमिति विवक्षितमिति चेदवस्थितिशब्देन संयोगमात्रविवक्षाया-माकाशादावतिव्याप्तिः। अपृथक्सिद्धसर्वेन्द्रियत्वविवक्षायां मृतशरीरेऽव्याप्तिः। तत्रेन्द्रियाभावात्। उपष्टम्भकत्वविवक्षायां प्राणेऽतिव्याप्तिः। यावत्सत्तमिन्द्रियासंयोगायोग्यं शरीरमिति चेन्न, मृतशरीराव्याप्तेरुक्तत्वादाकाशेश्वराद्यतिव्याप्तेर्दुर्वारत्वाच्च। तन्मते मन इन्द्रियस्य नित्यत्वात्। इन्द्रियभिन्नत्वे सति प्राणव्यापाराधीन-प्रवृत्तिनिवृत्त्यादिकं शरीरमिति विवक्षितमिति चेन्न। आत्मन्यति-व्याप्तेः। सर्वप्रवृत्तिषु तादधीन्यं विवक्षितम्। आत्मनस्तु प्राणा-धीनजीवनहेतुप्रयत्नसत्त्वान्नातिव्याप्तिरिति चेत्तदासम्भवः। न हि वायूदकाद्याकृष्यमाणशरीरप्रवृत्तीनां प्राणाधीनत्वम्। अतः इन्द्रि-याश्रयत्वलक्षणमसमञ्जसम्। तृतीयमपि लक्षणन्न विचारसहम्। तथाहि। भोगायतनत्वमपि यदि भोगस्थानमात्रं तदा गृहारामा-दिष्वतिव्याप्तेः। यमाश्रित्यैवात्मा भोगी। तद्भोगायतनमिति विव-क्षितमिति चेन्न। अशरीराणामपि मुक्तानां भोगाभ्युपगमेनासम्भ-वापत्तेः। भोगशब्देन दुःखात्मकभोगो विवक्षित इति चेन्न। इन्द्रि-येष्वतिव्याप्तेः। आत्मा हीन्द्रियाण्याश्रित्यैव दुःखी भवति। ईश्वर-नित्यमुक्तेच्छागृहीतशरीरेष्वव्याप्तिश्च। आत्मत्वेन भ्रमविषयत्वं शरीरत्वमिति चेन्न। नास्तिकादिभिरात्मतया बुद्ध्यमानेषु प्राणे-न्द्रियादिष्वतिव्याप्तेः। अथ शिरःपाणिपादहस्तादिमयं शरीरमिति चेन्न शिलापुत्रकादिष्वपि तत्सम्भवादतिव्याप्तेः। प्राणादिमत्त्वे

सतीति विशेषणान्नातिव्याप्तिरिति चेन्न। मृतशरीरादावव्याप्तेः। यदा कदाचित् प्राणादिमत्त्वं विवक्षितमिति नाव्याप्तिरिति चेन्न। स्थावरादिशरीरेष्वव्याप्तेः। तत्र शिरःपाण्याद्यवयवाभावात्। एवं लक्षणान्तराण्यपि दूष्याणि। अतो यथोक्तमेव लक्षणं ग्राह्यम्।

शरीरविभागः

तदेतच्छरीरं द्विविधम्। नित्यमनित्यञ्चेति। तत्र त्रिगुणकालजीवशुभाश्रयात्मकमीश्वरशरीरं नित्यम्। नित्यानां स्वाभाविकमनन्तगरुडविष्वक्सेनादिरूपञ्च। अनित्यं द्विविधम्। कर्मकृतमकर्मकृतञ्चेति। अकर्मकृतञ्चेश्वरस्य महदादिरूपम्। तथाऽनन्तगरुडादिनित्यानां मुक्तानाञ्च ऐच्छिकं तत्तद्रूपम्। कर्मकृतमपि द्विविधम्। स्वसङ्कल्पसहकृतकर्मकृतं केवलकर्मकृतञ्चेति। पूर्वं महतां सौभरिप्रभृतीनां शरीरम्। उत्तरञ्चान्येषां क्षुद्राणाम्। पुनश्शरीरं द्विविधम्। जङ्गमजङ्गमञ्चेति। काष्ठशिलावृक्षादि शरीरं जङ्गमम्। शिलादिशरीरिणोऽपि जीवा विद्यन्त इति अहल्यावृत्तान्तात् सिद्धम्। 'यानि स्थावरतां नरः। श्मशाने जायते वृक्षः कङ्कगृध्रनिषेवितः। इत्यादि प्रमाणमिहानुसन्धेयम्' इदञ्च व्याप्टिनामरूपभाजां सर्वेषां जीवानुप्रवेश श्रुतिबलात् सिद्धम्। जङ्गमश्चतुर्धा। देवमनुष्यतिर्यङ्नारकिभेदात्। असुरयक्षराक्षसादयोऽपि देवयोनयः। आलोकवृत्तिब्राह्मणक्षत्त्रियवैश्यशूद्रादयो मनुष्ययोनयः। तेषां श्रुतिस्मृत्युक्तविधिनिषेधविषयता। देवादीनामपि

साऽस्त्येव। प्रायश्चित्ताध्वरतपोयोगब्रह्मविद्यादिश्रवणात्। मृगपक्षिसरीसृपादयस्तिर्यग्योनयः। नारकिनस्तु दुःखैकताना दुस्त्यजाश्च विग्रहाः। जङ्गमं पुनर्द्विविधम्। योनिजमयोनिजञ्चेति। अयोनिजन्तु देवादिषु त्रिष्वपि सम्भवति। प्रजापतिमधुकैटभधृष्टद्युम्नैरावतस्वेदजादिष्वयोनिजशरीरदर्शनात्। तत्र योनिजशरीरेष्वेव पञ्चमाहुत्यपेक्षा। योनिप्राप्तेः पूर्वमाकाशवायुधूमाभ्रमेघवृष्टिव्रीह्यन्नरेतस्सिक्षु अन्यशरीरेषु संयोगमात्रम्। तत्र व्रीह्यादिप्राप्तेः पूर्व शीघ्रमेव निष्क्रमणं ततः पर कृच्छ्रान्निष्क्रमणम्। द्युपर्जन्यपृथिवीपुरुषानन्तरं पञ्चमे योषिदग्नौ हुतस्य जीवस्य तत्तत्कालप्रतिनियतपरिणामशालिनी शरीरप्राप्तिः। तत्प्रकारविशेषा आयुर्वेदयोगशास्त्रेषु विशदमनुसन्धेयाः। एवं जरायुजाण्डजस्वेदजोद्भिज्जादिभेदो विभाव्यः। एषां वृष्टिजीवशरीराणामीश्वर प्रति शरीरत्वं सद्वारकमद्वारकञ्चेति एकः सम्प्रदायः। सद्वारकमेवेत्यन्यः। प्रथमः पक्षः भाष्यकाराभिप्रेतः। द्वितीयस्तु विवरणकाराङ्गीकृतः। अयञ्च विवादः देवमनुष्यादिव्यष्टिदेहविषयः। दिव्यमङ्गलविग्रहाद्यचित्सु सद्वारकत्वायोगात् एव समष्टितत्त्वाना साक्षात् परमपुरुषशरीरत्वम्। अण्डसृष्टिसमन्तरभाविदेवमनुष्यादिनामरूपव्याकरणमात्र एवानेन जीवेनेत्यादि श्रुत्यनुरोधेन सद्वारकत्वम्। तत्राप्यद्वारकं सद्वारकञ्चेति न कश्चिद्दोषः। न चैकस्य युगपदेनकं प्रतिशरीरत्वमनुपपन्नम्। तल्लक्षणसत्त्वेनानेकशरीरत्वोपपत्तेः। अनेक प्रति शेषत्वादिवत्। न च स्वतन्त्रशरीरभूतत्रिगुणद्रव्यस्य जीवानुप्रवेशमात्रेणेश्वर प्रति शरीरत्वमपसरति। न च तदान्यद्रव्यं

भवति। द्रव्याभेदाद्व्याकृतभूतेन्द्रियादीन् प्रति चेश्वरस्यान्तर्यामित्वम्। अत एवैतेषां तच्छरीरत्वं श्रूयते। सुषुप्तिमूर्च्छाद्यवस्थासु च स्वाभाविकमीश्वरनियाम्यत्वमेव देहदेहिनोर्दृश्यते। अत इदमद्वारनियमनं द्वितीयपक्षे न स्यात्। जीवसत्तामात्रञ्च न देहनियमनौपाधिकम्। तदानीं ज्ञानेच्छारहिततया गगनादिसत्तातुल्यत्वात्। अतस्सर्वावस्थानां सर्वद्रव्याणामीश्वरं प्रत्येव स्वतश्शरीरत्वम्। जीवं प्रति तु भगवत्सङ्कल्पकृतमिति समीचीनोऽय पन्थाः॥

इति श्रीवत्सकुलतिलकश्रीकृष्णसूरिचरणारविन्दसेवासम्पादितः।

श्रीनिवासराघवदासेन विरचिते श्रीरामानुजसिद्धान्तसङ्ग्रहे

प्रकृतिपरिच्छेदस्समाप्तः॥

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

हरिः ओम्

# जीवनिरूपणम्

अथ जीवो निरूप्यते। अणुत्वे सति चेतनत्वं शेषत्वे सति चेतनत्वमित्यादि तल्लक्षणम्। पार्थिवाद्यणुष्वतिव्याप्तिवारणाय चेतनत्वम्। तावन्मात्रोक्तौ ईश्वरेऽतिव्याप्तिः। अतोऽणुत्वे सतीति। यद्यपीश्वरेऽप्यणोरणीयानित्यणुत्वं श्रुतं तथापि न तत् स्वाभाविकम्। महतो महानित्यसाङ्गत्यापत्तेः। किन्तूपासकहृदयाल्पस्थानवृत्तिदिव्यमङ्गलविग्रहविशिष्टत्वोपाधिकृतं तत्। यद्वाऽणुदेशेऽपीश्वरस्थित्युपपादनेन विश्वव्याप्तिं बोधयति सा श्रुतिः न त्वणुत्वम्। आहुश्चाचार्याः —

श्लो॥ अणोरणीयान् महतो महीयानित्यनुश्रुवः।
विश्वव्यापित्वतात्पर्यान्न मिथो बाधमिच्छति॥ इति।

अतो नेश्वरेऽतिव्याप्तिः। ननु 'य आत्मनि तिष्ठन्'। अन्तः प्रविष्टश्शास्ता। 'अन्तर्बहिश्च तत्सर्वमित्यादिभिरणूनामपि व्याप्त्यभिधानात्। तदानुगुण्येनाणोरणीयानित्यस्य यथाश्रुतार्थपरत्वेनेश्वरस्य पुण्यत्वं सिद्ध्यतीति चेन्न। अणोरन्तः प्रदेशस्य विभोर्बहिः

प्रदेशस्य चासम्भवेन तत्रान्तर्बहिर्व्याप्तिप्रतिपादनासम्भवात्। यत्रोक्तप्रदेशद्वयसम्भवः तत्रैवान्तर्बहिर्व्याप्त्यभिधानात्। यत्र नोक्तप्रदेशद्वयसम्भवस्तत्र व्याप्तिमात्राभिधानस्वीकारान्नाण्वन्तर्व्याप्तिरीश्वरस्य। आहुश्चाचार्याः —

श्लो॥ अन्तर्बहिश्च तद्व्याप्तिः तत्र यत्रोभयं भवेत्।
विभोरणोश्च न बहिर्नान्तस्तस्मान्न सा तयो॥ इति।

ननु श्रीकृष्णावतारे जगदन्तर्गतबालोदरे सर्वजगत्स्थितिदर्शनात् अल्पपरिमाणे पृथूनां ग्रासनावश्यकत्वात् पृथोरीश्वरस्याण्वन्तर्व्याप्तिसम्भव इति चेन्न। अत्राप्यणुभूतबालशरीरेण पृथोर्जगतः ग्रासासम्भवात्। किन्तु भगवद्विग्रहादेस्सङ्कोचविकासावस्थाद्वयाभ्युपगमेन तथा दर्शनोपपत्तेः। यदा जगद्बहिष्ठं दृश्यते तदा शरीरस्य सङ्कोचावस्था। यदा उदरगतं दृश्यते तदा विकासावस्था। यद्वा जालरन्ध्रेण गृह्यमाणस्सूर्यो जालमध्यगतस्थ इवाभासते तद्वत्सूक्ष्मशरीरग्राह्यसर्वजगतस्तन्मध्यगतत्वेन भानसम्भवात् परिमितविग्रहकालेऽपरिमितविग्रहान्तरपरिग्रहेण तच्छरीरान्तर्वृत्तित्वं जगतः परिमितापेक्षया बहिष्ठत्वञ्च। दृश्यते चाञ्जनेयादेरक्षोविशेषसंवादकालत कुक्षिप्रवेशकालयोस्स्थूलसूक्ष्मविग्रहत्वम्। अतोऽविरुद्धत्वात् परिमितस्यान्तर्वृत्तित्व न पृथुवस्तुनः। आहुश्चाचार्याः —

श्लो।। यदल्पपरिमाणेन पृथूनां ग्रसनं श्रुतम्।
अचिन्त्यमिदमित्येके चिन्तनभ्रमभीरवः।। इति।

नन्वेवमपि ईश्वरस्य सर्वशक्तत्वाणोरन्तर्विभोर्बहिश्च प्रवर्तनं घटताम्। अन्यथा सर्वशक्तत्वभङ्गप्रसङ्गात्। तथाहि। सर्वशक्तत्वं हि सर्वकार्यनिर्वाहकत्वम्। अत्राणोरन्तः प्रवेशकार्यस्य विभोर्बहिर्व्यापनकार्यस्य चाशक्यत्वेन सर्वनिर्वाहकत्वरूपसर्वशक्तित्वहानिस्स्यात्। तच्चाणोरन्तः प्रवेश आवश्यक इति अण्वन्तः प्रविष्टस्याणुतरत्वप्रसङ्गेन पूर्वोक्तजीवलक्षणातिव्याप्तिर्दुर्वारेति चेदुच्यते। विरुद्धकार्यघटनात्तस्य न सर्वशक्तत्वम्। किन्तु यत्कार्यं तत्सर्वं करोति ततश्चान्यैरप्यशक्यं करोतीति सिद्ध्या तादृशमेव तस्याघटितघटन रूपं सर्वशक्तत्वमागमाभिप्रेतमविरुद्ध स्वीक्रियते। न व्याघातघटनात। तथा सति सप्तभङ्ग्यादिजल्पनजैनमतद्वेषाभावप्रसङ्गात्। आहुश्चाचार्याः —

श्लो।। तस्मादीशो विरुद्धद्वितयमघटयन् सर्वशक्तः कथं स्या-
तन्न व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः। इति।

अतस्सर्वव्यापकेश्वरे तद्विरूद्धाणुत्वासम्भवान्नातिव्याप्तिः। एवं शेपत्वमात्रोक्तौ घटादावतिव्याप्ति.। चेतनत्वमात्रोक्तौ ईश्वरेऽतिव्याप्तिः। अतश्शेपत्वे सति सचेतनत्वमुक्तम्। नन्वेवमपि लक्ष्म्यामतिव्याप्तिः। तस्यां ईश्वरशेपत्वाच्चेतनत्वाच्चेति चेन्न। शेषत्व–पदेनेश्वरत्वपर्याप्त्यधिकरणनिरूपितशेषत्वस्य विवक्षितत्वात्। ईश्व-

रत्वस्य श्रीश्रीशयोः पर्याप्तत्वात्।

श्लो॥ अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो विभुः।
'ईश्वरस्सर्वभूतानां, ईश्वरी सर्वभूतानां'
अस्येशाना जगतो विष्णुपत्नी।
'त्वया च विष्णुना चाम्ब जगद्व्याप्तं चराचरम्।
'यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम।
अस्या मम च शेषं हि विभूतिरुभयात्मिका।'

इत्यादिप्रमाणशतैरुभयोरविशेषेण जगत्पतीश्वरत्वाभिधानात्। ईश्वरत्वं श्रीश्रीशयोर्व्यासज्यवृत्ति। अतः लक्ष्म्याः अपीश्वरत्वपर्याप्त्यधिकरणत्वेन तन्निरूपितशेषत्वस्य तस्यामभावेन नातिव्याप्तिः। स च जीवो देहादतिरिक्तः। 'मम गेहं' 'मम क्षेत्रमितिवन्मम देहः' मम शिर 'इति व्यतिरेकप्रतीतेः। किञ्च शिरःपाण्यादिसङ्घातातिरिक्तावयविनो निरस्तत्वात् सङ्घातस्य सङ्घातिव्यतिरेकाभावाच्छिरःपाण्याद्यवयवेष्वेव चैतन्यं वाच्यम्। तत्रापि विनिगमकाभावात् सर्वावयवेषु चैतन्यस्य स्वीकार्यत्वेन देहभेद इवाभिप्राय भेदप्रसङ्गेन विरुद्धाभिप्रायानेकग्रामण्यधिष्ठितग्रामवत् प्रवृत्तिनिवृत्त्यादि कार्यं किमपि न स्यात्।

नन्वविरुद्धाभिप्रायानेकपुरुषाधिष्ठितग्रामवदन्योन्याविरोधसम्भव इति चेन्न। अनादौ संसारे कदाचित् विरोधस्यापि प्रसक्त्या परस्पराविवादनियमो न स्यात्। अतो देहातिरिक्त

एवात्मा । न चामी बाह्येन्द्रियाणि । तेषां बहुत्वेन पूर्वोक्तपरस्परा- विवादनियमानुपपत्तिप्रसङ्गात् । तेषां प्रतिनियतविषयत्वादन्यानु- भूतस्यान्येन प्रतिसन्धानाभावप्रसङ्गाच्च । न च तेष्वन्यतमः । नियामकाभावात् । न च तत्समुदायः । समुदायोऽहमिति प्रत्यय- प्रसङ्गात् । अन्ततस्समुदायिषु पर्यवसानेन पूर्वोक्तदोषप्रसङ्गाच्च । स्वप्नदशायां बाह्येन्द्रियोपरतौ 'सिंहोऽहं' 'व्याघ्रोऽहमित्यात्मदर्श- नेन बाह्येन्द्रियवर्गाद्व्यतिरेकप्रतीतेश्च । देहेन्द्रियाणामुत्पत्तिवि- नाशयोगित्वात् । कृतहानाकृताभ्यागमप्रसङ्गाच्च, नापि मन आत्मा । मनसा ह्येव पश्यतीति श्रुत्या सुखादिप्रतीतिस्सकरणिका क्रियात्वादित्यनुमानेन च कर्तुरात्मन करणतया मनसस्सिद्धे ।

श्लो।। एकादशं मनश्चात्र दैवा वैकारिका स्मृत : ।

इत्याहङ्कारिकत्वेन मनस अनित्यत्वात् । कृतहानाकृताभ्या- गमप्रसङ्गाच्च ।

नापि प्राण आत्मा । तेष्वपि देहोक्तयुक्तिसाम्यात् । नापि धी. । ज्ञातृधर्मतयाऽनश्वरतया च धियस्स्फुरणात् स एवा- हमिति प्रतिसन्धानानुपपत्ते । न चेद प्रतिसन्धानं भ्रान्तिरिति वाच्यम् । बाधरहितत्वात् । तथा चात्मसिद्धौ

श्लो।। देहेन्द्रियमनःप्राणधीभ्योऽनन्यसाधनः ।

नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्न स्वतः सुखी । इति।

व्यापी अतिसूक्ष्मतया सर्वाचेतनान्त प्रवेशयोग्य इत्यर्थः । न घटमहं

जानामि घटमहं संवेद्मीत्यादि प्रतीतेरहं प्रत्ययविषय आत्मान्तःकरणम्। तस्य परागर्थत्वात्। अहं बुद्ध्यैव हि परागर्थान् प्रत्यगर्थो विभिद्यते। अतोऽहमर्थ आत्मा। स एव ज्ञाता। अहं जानामीति ज्ञातृत्वेनैवाहमर्थप्रतीतेः। आत्मनोऽहं प्रत्ययगोचरत्वप्रतिक्षेपकाणि आत्मा नाहं प्रत्ययगोचरः आत्मत्वात्। अजडत्वान्निर्विकारत्वात् ब्रह्मवदित्यादीनि प्रत्यक्षागमबाधात् घटादिसपक्षव्यावृत्तत्वेनासाधरणत्वाच्च निरस्तानि। एवं ज्ञातृत्वकर्तृत्वादिक नात्मधर्मः। धर्मत्वादहयत्वादित्यादिकमपि प्रत्यक्षबाधाच्छास्त्रबाधात् विपक्षे बाधकाभावाच्च दुस्स्थम्। अतोऽहमर्थ आत्मा। स एव ज्ञाता कर्ता। ज्ञातृत्वञ्चास्य स्वाभाविकाकार इति न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति श्रुत्यादिसिद्धम्। भोक्तृत्वहेतुभूत कर्तृत्वञ्च भोक्तुर्जीवस्यैव। तच्च सामान्यतः परमपुरुषहेतुकमिति शारीरकमीमांसायां स्थापितम्। अस्य च नित्यत्वनानात्वाणुत्वादीनि श्रुत्युपपत्तिभ्यां सिद्धानि। 'नित्यो नित्यानां चेतनश्चेतनानाम्। अजो नित्यश्शाश्वतोऽयं पुराणः।

वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवस्स विज्ञेयस्स चानन्त्याय कल्पते।

इत्यादि श्रुतिभिर्नित्यत्वनानात्वाणुत्वादीनि सिद्धानि। उपपत्तिश्च यदि स्थिरत्वमात्मनयभ्युपगम्यते तदा भाविकृत्याद्यैहिकफलसाधने कस्यापि प्रवृत्तिर्न स्यात्। देहपर्यन्तस्थायित्वाभ्युपगमे आमुष्मिकस्वर्गादिफलसाधनयागादौ प्रवृत्तिर्न स्यात्। आकल्पस्थायित्वाभ्यु-

पगमे मुक्तिसाधनभक्त्यादौ प्रवृत्तिर्न स्यात्। आमोक्षस्थायित्वाभ्युपगमे मुक्त्यैश्वर्यप्रतिपादकशास्त्राणां नैष्फल्यं स्यात्। अनुभवितुरभावात्।

ननु विज्ञानघन एवैभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यतीति जीवनाशश्श्रूयत इति चेन्न। म्रियमाणजनसमीपस्थानां सर्वेषामदर्शनमात्रप्रतिपादकत्वात्तस्याः। विनश्यतीत्यस्य 'णश अदर्शने' इति धातुनिष्पन्नत्वेनादर्शनार्थकत्वात्। स्मर्यते च—

अदर्शनादिहायातः पुनश्चादर्शनं गतः॥ इति॥

अन्यथा अविनाशी वाऽरेऽयमात्मा' इत्यादिविरोधात्।

नन्वेवमपि न प्रेत्य सञ्ज्ञाऽस्तीति मुक्तस्य निस्सञ्ज्ञबोधत्वश्रुत्या नाशस्सिद्ध्येदिति चेन्न। देहात्मैक्यबुद्धेर्देहनिबन्धनाख्याभेदस्य वा निवृत्तौ तात्पर्यात्। न चैवमपि यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहायेति निदर्शनात् मुक्तोऽप्यस्तमेष्यतीति चेन्न। तत्र यथा प्रविष्टजलस्य विद्यमानजलसम्मेलनात् तस्य प्राचीननामरूपाभाव एव।

ननु तस्य स्वरूपनाश। तथा मुक्तस्यापि प्राचीननामरूपविरह एव। न स्वरूपनाशः। तस्य नित्यत्वात्। अन्यथा पयः प्रस्थद्वयसम्भेदे प्रस्थशेषवत्प्रसङ्गः। यथोदकमित्यादेरस्य तादृगेव

भवतीति श्रुत्यन्तरविरोधाच्च। मुक्तिदशायाञ्जीवभेदनिवृत्तिवादाश्च कर्मकृतदेवादिवैषम्यनिवृत्तिपराः।

ननु 'ब्रह्म वेद ब्रह्मैव भवती'त्यवधारणाज्जीवनिवृत्तिर्गम्यते इति चेन्न। इवकारस्येव एवकारस्य परमसाम्यप्रतिपादकत्वात्।

श्लो॥ 'स्पर्धमानो विष्णुरेव भूत्वे' त्यत्र एवकारस्य साम्यप्रतिपादकत्वदर्शनात्। अतो नित्य आत्मा। स च सुखदुखज्ञत्वादिभिः परस्पर भिन्नः। जीवात् द्वैतप्रतिपादकवचनानि तु प्रकारैक्यविषयाणि। प्रकारैक्यश्च सर्वेषामात्मनां ज्ञानमयत्वमेव। प्रकारैक्येह्येकादिशब्दाः प्रयुज्यन्ते। यथाऽयमयञ्चैको व्रीहिरिति रामसुग्रीवयोरैक्यमित्यादि च। सर्वजीवानां ससारावस्थायां स्वरूपत. मुक्त्यवस्थायां गुणतोऽपि च साम्यम् श्रुतिस्मृतिसिद्धम्। तत्र जीवभेदनिषधवचनान्यपि प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिनिबन्धनदेवत्वादि भेदनिषेधपराणि। एषामणुत्वञ्च निरूपयिष्यते। स चायमात्मा अहमिति स्वयमेव प्रकाशते 'अत्रायं पुरुषस्स्वयं ज्योतिर्भवतीति'श्रुतेः अस्य स्वय प्रकाशत्वञ्च स्वस्मा एव। परस्य तु तज्ज्ञानविषयतयैवात्मा प्रकाशते। स्वत्यापि प्रमाणान्तरावसेयाणुत्वशेषत्वनियाम्यत्वनित्यत्वादिविशिष्टरूपेण शास्त्रजन्यज्ञानविषयत्वमस्त्येव। न चात्मनः नित्यत्वादिविशिष्टाकारा शास्त्रवेद्यत्वे स्वरूपमात्रप्रकाशस्य सिद्धान्तेनाभ्युपगमेनात्मनस्स्वयम्प्रकाशत्वोक्तिः कथं घटत इति वाच्यम्। जाग्रतस्स्वप्नसुषुप्त्याद्यवस्थासु

सर्वत्राहमहमित्यनुभवात्। प्रत्यक्त्वैकत्वादिविशिष्टतयैव धर्मिस्फुरणेन स्वप्रकाशत्वोक्तेस्सम्भवात्। अथ प्रत्यक्त्वादीनां धर्मि भास्यत्वाभ्युपगमे श्रीमत्सारशास्त्रविरोधः। तत्र हि धर्मभूत ज्ञानस्य विषयित्वं धर्म्यपेक्षया व्यावर्तकमित्युक्त्वा विषयित्वञ्च स्वव्यतिरिक्तकिञ्चित्प्रकाशकत्वमित्युक्तम्। धर्मिणोऽपि प्रत्यक्त्वादिप्रकाशकत्वे स्वव्यतिरिक्तकिञ्चित्प्रकाशकत्वस्याति–प्रसक्तत्वात् तद्विरोधपरिहाराय धर्मिणस्स्वरूपमात्रप्रकाशकत्वस्वीकारे 'सविशेषविषयत्वात् सर्वप्रमाणानां स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्याम' इति श्रीभाष्यविरोधः। अतः उभयतः पाशारज्जुरिति न्याय इति चेन्न। श्रीमद्भाष्यानुरोधेन प्रत्यक्त्वादिविशिष्टस्यैवात्मनः प्रकाशत्वं वाच्यम्। श्रीमत्सारशास्त्रविरोधस्तु एवं परिह्रियते। स्वव्यरिक्तकिञ्चित्प्रकाशकत्वमित्यस्य स्वस्याऽपृथक्सिद्धधर्मव्यतिरिक्तकिञ्चित्प्रकाशकत्वमित्यर्थः। धर्मिणस्स्वव्यतिरिक्तप्रत्यक्त्वादिप्रकाशकत्वेऽपि तस्य तदपृथक्सिद्धधर्मत्वेन विरोधाभावात्। यद्वा स्वव्यतिरिक्तेत्यस्य स्वसंयुक्तप्रकाशकत्वमित्यर्थः। तेन प्रत्यक्त्वादेरसंयुक्तत्वेन न दोषः। न च तथा सङ्कोचे मानाभाव इति वाच्यम्। तदीयबहुतरसूक्तिविरोधपरिहाराय तथा सङ्कोचस्यावश्यकत्वात्। न च धर्मिवत् प्रत्यक्त्वादीनामपि स्वप्रकाशकत्वाभ्युपगमेन धर्मि-

भास्यत्वाभावेनातिप्रसङ्गाप्रसक्त्या तथा सङ्कोचो न कार्य इति वाच्यम् । प्रत्यक्त्वैकत्वादीनामद्रव्यत्वेन तद्वत्तिधर्मान्तराभावेन स्वमात्रप्रकाशो वाच्य इत्यद्वैतिमतविजयप्रसङ्गात् । ज्ञानव्यतिरिक्तप्रत्यक्त्वादेस्स्वप्रकाशकत्वे सिद्धान्तविरोधाच्च ।

अन्यथा बुद्धिसरे बुद्धिर्द्रव्यं विकारान्वयत इतरवद्बोद्धृवच्चाजडत्वादिनाऽजडत्वहेतुना बुद्धेर्द्रव्यत्वं साध्यते । तत्राजडत्वहेतोरद्रव्ये प्रत्यक्त्वादौ सत्वेन व्यभिचारविरोधस्स्फुट एव । एव तत्रैवान्यत्र निर्विकल्पकस्य विशिष्टविषयत्वसाधनावसरे—

श्लो।। 'धीत्वादेर्वा विशिष्टं प्रथयति जनिता बुद्धिराद्यक्षभेदै'

रित्यत्र प्रथमाक्षसन्निपातजनिता बुद्धिः विशिष्टविषयधीत्वात् सम्प्रतिपन्नवत् । आत्मस्वरूपप्रत्ययश्चाहंत्वादिविशिष्टप्रकाशात्मेत्यङ्गीचक्रुरिति सर्वार्थसिद्धिविरोधश्च ।

एवं मतिपरिच्छेदे धर्मिज्ञानस्यापि विशिष्टत्वात् परमतादतिरेक इति न्यायसिद्धाञ्जन एवान्यत्र ।

यत्तु भाष्ये 'एवं हि सुप्तोत्थितस्य परामर्शस्सुखमहमस्वाप्समित्यनेन' प्रत्यवमर्शेन न तदानीमेवाहमर्थस्यैवात्मनस्सुखित्वं ज्ञातृत्वञ्च ज्ञायत इत्युक्तम् । तत्स्वरूपानुकूल्यविवक्षया प्रत्यक्त्वविवक्षया चेति न विरोध इत्यादिन्यायसिद्धाञ्जनविरोधश्च ।

एवं प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानु—

गुण्यमिति श्रीभाष्यव्याख्यानावसरे उच्यते। व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणम्। तद्धि व्यवहारप्रतिसम्बन्धित्वं तदेव भासमानत्वम्। 'घटः प्रकाशत' इति व्यवहारश्च तन्निबन्धनतया मुख्यः। व्यवहारप्रतिसम्बन्धित्वं प्रति हेतुत्वरूपं व्यवहारानुगुण्यं ज्ञानस्यैव। तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य व्यवहारप्रति-सम्बन्धितां प्रति हेतुत्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूपभूतज्ञान-स्यैव। स्वस्वगतैकत्वपराक्त्वानुकूलत्वाद्याकारकस्वाश्रयतत्सम्ब-न्धानां व्यवहारप्रतिसम्बन्धित्वे हेतुत्वरूपं व्यवहारानुगुण्यन्तु धर्म-भूतज्ञानस्यैव। अतस्स्वपरव्यवहारानुगुण्यं ज्ञानसाधारणप्रकाश-लक्षणमिति युक्तमिति श्रुतप्रकाशिकाविरोधश्च।

एवं नन्विद प्रत्यक्त्वं प्रत्यक्त्व न तावदात्मस्वरूपमित्या-रभ्य इतरथा धर्मभूतज्ञानविषयित्वप्रसङ्ग इति वाच्यम्। स्वस्वा-पृथक्सिद्धधर्मव्यतिरिक्तविषयित्व नास्तीत्यत्र तात्पर्याद्विषयित्वाभा-वप्रवादस्येत्यादि। उत्तरत्राप्युच्यते अस्यैव सुषुप्तिदशायां मन्दा-नुकूल्यं भासत इति। न चैतदपह्नोतु शक्यम्। न च तत्स्वाभा-विकमिति वक्तुं शक्यते। आत्मनो मन्दानुकूल्यस्वभावत्वानभ्युपगमात् न च तद्धर्मभूतज्ञानवेद्यम्। तस्येन्द्रियाधीनप्रसरत्वेन सुषुप्तिदशा-यामसम्भवात्। अतः कर्माधीनमन्दानुकूल्यमात्मस्वरूपाद्भिन्नम्। तत्स्वरूपज्ञानेन भास्यत इत्यकामेनापि स्वीकर्तव्यम्। एवमुत्तरत्र धर्मिज्ञानस्यापि विशिष्टत्वात् परमतादतिरेक इत्येतद्व्याख्यायाम्।

ननु विषयाश्रयगुरुत्वज्ञानाभ्युपगमे परमतादविशेषता इत्या-

शङ्कत विषयादिविरहेऽपि परैरिव न सर्वात्मनाम निर्विशेषत्वमङ्गी-क्रियते। विशेषान्तरस्वीकारादित्यभिप्रायेणाह धर्मिज्ञानस्यापीति। मतिपरिच्छेदे। यत्तु भाष्ये एव हि सुप्तोत्थितस्य परामर्शः। सुखम-स्वाप्समित्यनेन प्रत्यवमर्शेन तदानीमेवाहमर्थस्यैवात्मनस्सुखित्वं ज्ञातृत्वञ्च ज्ञायत इत्युक्तम। तत्स्वरूपानुकूल्यविवक्षया प्रत्यक्त्वविवक्षया चेति न विरोध ग्रन्थव्याख्यायः स्वरूपानुकूल्येति। अनुकूलत्वमेव सुखित्वम्। प्रत्यक्त्वमेव ज्ञातृत्वमिति भाव.। इत्यादि श्रीरङ्गरामानुजस्वामिग्रन्थश्च विरुद्धयते। एव सूक्त्यन्तराणि विस्तरभयान्नोदाहृतानि। अतो धर्मी प्रत्यक्त्वादविशिष्टतयैवभासत इति सिद्धम्।

यद्यपि सर्वार्थसिद्धिव्याख्यायामानन्ददायिन्यां 'ज्ञातुर्ज्ञेयावभासोस्मितिरिति' श्लोके, स्वस्यश्वात्मा तु सिद्धिर्मतिगगुणबलि स्वान्ययोरिति' श्लोके च व्याख्यानपद्धतौ प्रत्यक्त्वादीनामपि स्वयप्रकाशत्वमस्तीति मतान्तरमित्युक्तम्। तथाऽप्युक्त श्रीभाष्यश्रुतप्रकाशिकाविरोधाद्वहुराचार्यसूक्तिविरोधादुक्तानुपपत्तिपरिहाराभावाच्च तदन्यदीयमेवेति मन्यामहे। इत्यल विस्तरेण।

सोऽयमात्मा ज्ञानगुणकः ज्ञानस्वरूपश्च। यद्यपि सत्यं ज्ञानमित्यत्र ज्ञानमित्यन्तोदात्तत्ववलात् ज्ञानाश्रयत्वार्थकत्वमङ्गीकार्यम्। आद्युदात्ताज्ज्ञानशब्दात्तदस्यास्तीत्यस्मिन्नर्थे अर्श आद्यजित्यच्प्रत्यये चित अन्तोदात्तत्वमित्यन्तोदात्तत्वात् ज्ञानशब्दस्य।

'विज्ञानं यज्ञन्तनुत' इत्यादिषु तद्गुणसारत्वन्यायेन ज्ञानगुणकत्वार्थकत्व स्वीकर्तव्यम्। 'तथाऽप्येष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष' इत्यत्र द्रष्टा श्रोतेति विशेषतो बोद्धेति समान्यतः प्रपञ्चितस्य ज्ञातृत्वस्य पुन पुनर्वचने प्रयोजनाभावाच्च विज्ञानात्मशब्देन ज्ञानस्वरूपत्वं सिद्धम्।

एवं यथा 'सैन्धवघन' इत्यत्र रसदृष्टान्तस्वारस्याद्विज्ञानघनशब्देन ज्ञानात्मकत्वं वाच्यमिति ज्ञानस्वरूपस्य ज्ञानगुणकत्वञ्च तेजस्स्वरूपदीपस्य तेजोरूपप्रभागुणवदुपपन्नम्। एव धर्मधर्मिणोर्ज्ञानत्वस्वप्रकाशत्वाभ्या साम्येऽपि स्वसयुक्तप्रकाशत्वरूपविषयित्वतदभावाभ्यां वैपम्यम्। ज्ञानत्वन्तु साधारणम्। तच्च कस्यचित् प्रकाशत्वरूप तदेवोभयत्रानुवृत्तं ज्ञानशब्दप्रवृत्तिनिमित्तम्। तच्च ज्ञानत्वं धर्मिणि प्रत्यक्त्वानुकूलैकत्वादिविशिष्टस्य स्वस्यैव प्रकाशत्वरूपं धर्मनिष्ठन्तु तावदतिरिक्तघटादिप्रकाशत्वरूपमिति विशेषः। आत्माऽणुः 'वालाग्रशतभागस्य,' आराग्रमात्र, उत्क्रान्तिगत्यागतीनामित्यादि श्रुतेरुपपत्तेश्च।

नन्वेकस्य पुरुषस्य युगपदखिलभुवनेष्वनेककार्योत्पत्तेः तत्तत्कार्य प्रत्यदृष्टवदात्ममयोगस्य कारणत्वाच्छरीरगमनेन तत्र तत्र सुखाद्युपलब्धेश्च। शरीरेऽपि पादे मे वेदना शिरसि मे वेदनेति युगपदनेकावयवेषु सुखदुःखसाक्षात्काराच्च। अदृष्ट स्वाश्रयसंयुक्त एवाश्रयान्तरे क्रियां जनयति। अन्योन्याभावविरोधिक्रियाहेतुगुण-

त्वात्। संयोगे व्यभिचारवारणायान्योन्याभावविरोधीति। अन्योन्याभावविरोधित्वञ्च स्वाश्रयप्रतियोगिकभेदासामानाधिकरण्यम्। संयोग आश्रयान्तरे क्रियाजनकरूपसाध्याभाववति स्वाश्रयप्रतियोगिक भेदासामानाधिकरण्यघटितहेतोरप्यभावान्न व्यभिचार इत्यनुमानाच्च आत्मनो विभुत्वं वाच्यमिति चेन्न। जीवस्याणुत्वेऽप्यदृष्टवदात्मसंयोगाद्देशान्तरेषु कार्यसिद्धेर्निष्प्रत्यूहत्वात्। अदृष्टस्येश्वरप्रीतिकोपरूपत्वेन तदाश्रयस्य विभुत्वात्। शरीरगमने च शरीरप्रत्युत्पन्नगमनेन तत्र तत्र सुखदुःखाद्युत्पत्तेरिन्द्रियादिवत्। आत्मनश्शरीरैकदेशवृत्तित्वेऽपि धर्मभूतज्ञानव्याप्त्या सर्वावयवावच्छेदेन सुखादिप्रतीतेः। अणुत्वे तूपलम्भश्रुतिस्वारस्यम्। विभुत्वे तु तद्वैरस्य कल्पनागौरवञ्च।

श्लो॥ 'नित्यस्सर्वगतस्स्थाणुः'

श्लो॥ 'तया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा'

इत्यादिषु सर्वगतत्वोक्तिः।

'अग्निर्यथैको भुवनं प्रविष्टः, 'वायुस्सर्वगतो महान्'

इत्यादिवज्जीवजातीयाना सर्वत्रानुप्रवेशात् धर्मभूतज्ञानद्वारा सूक्ष्मानुप्रवेशक्षमतया वा निर्वाह्या।

अत एव नित्यो व्यापीत्यात्मसिद्धिवचनगतव्यापिपदमप्यतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभाव इति श्रीभाष्ये व्या-

ख्यातम्। उत्क्रान्तिगत्यागतीनामित्यादिसूत्रैश्च क्रियावत्त्वेनाणुत्वं समर्थितम्। हृत्प्रदेशस्थितस्याणोर्जीवस्य ज्ञानद्वारा नानाधिष्ठानमुपपन्नम्। अत एव सौभरिप्रभृतीनां नानादेहाधिष्ठानं घटते। न ततोऽपि विभुत्वक्लृप्तिः किञ्च विभुत्वाकाशादिषु शब्दादीनामप्यवृत्तित्वं युष्माभिरिष्यते, एवमात्मनि ज्ञानेच्छाप्रयत्नादीनामप्यव्याप्यवृत्तित्वं तथा दृष्टमपि स्वाश्रयैकवृत्ति। तच्च स्वाश्रयसंयोगिनि क्रियाञ्जनयत्स्वोत्पत्त्यवच्छेदकशरीरसंयुक्त एव जनयेत्। प्रयत्नवत्। अन्यथा शरीरावच्छिन्नात्मप्रयत्नेन दूरस्थशिलादिचलनप्रसङ्गात्। न चादृष्टं तत्र तत्र गच्छति। अमूर्तत्वात्। अतश्शरीरावच्छिन्नात्मा दृष्टाद्देशान्तरकार्याणामनुत्पत्तिस्स्यात्।

ननु प्रत्यात्मनियतान्यनेकान्यदृष्टानि तत्र तत्र सन्ति। तैरेव दूरस्थकार्योत्पत्तिरिति चेन्न। देशान्तरभ्रातृव्यशरीरभेदनाय्नाभिचारकरणे तज्जन्यादृष्टस्यैतद्देशवृत्तिशरीरावच्छिन्नात्मन्युत्पत्त्या तेन देशान्तरशत्रुशरीरभेदेन कार्यन्न स्यात्। एव स्वर्गार्थकर्मानुष्ठानजनितादृष्टस्य लोकान्तरस्वर्गफलजनकत्वमपि न स्यात्। न च तत्तत्क्रियानुष्ठाने नादृष्टं देशान्तराव च्छिन्नात्मन्युत्पद्यत इति नानुपपत्तिरिति वाच्यम्। असमवायिदेशावच्छेदेन तदुत्पत्तिस्वीकारात्। अन्यथाऽनिप्रसङ्गात्। अतो विभुत्वकल्पनं निरर्थकम्। किञ्च यदि सर्वे जीवास्सर्वशरीरव्यापिनस्तदा सर्वे देहास्सर्वेषां भोगाय स्युः। नियामकाभावाद्यद्यददृष्टं स्वावच्छिन्नात्मनि देहादिसृष्टया तत्तद्देह एव फलं-

जनयेत् । नान्यत्र । तदा यष्टुस्स्वर्गादिकमिहैव स्यात। देशान्तरे–तु प्रयत्नन्यायेन फलजननासामर्थ्यात्। अतस्त्वत्पक्षे प्रतिनियता दृष्टजन्यत्वस्यैवासम्भवात् व्यवस्थाभङ्गो दुर्वारः।

नन्वणुपक्षेऽपि फलानां जीवगता दृष्टजन्यत्वात् ईश्वर–गततत्प्रीतिकोपादृष्टस्य सर्वसाधारणत्वात् तत्रापि व्यवस्था न सिद्ध्यतीति चेन्न। तत्तदाराधकादिप्रतिनियतानुग्रहादिवैचित्र्यात् तदुचितफलदाने न व्यवस्थासिद्धेः। राजादिन्यायात। राजा हि लोके तत्तत्सेवकविरचितसेवाविशेषेण परितुष्टस्तत्तत्पुरुषाय तत्त-त्सेवानुगुणं फलं ददाति नान्यस्य इति। एतेन विभोरात्मन-स्स्वप्रकाशत्वे सर्वत्र भानप्रसङ्गः। अत आत्मा जड इत्युक्तं प्रत्युक्तम्। जीवस्याणुत्वात्। विभुत्वे बाधकस्योक्तत्वाच्च।

नन्वात्मना 'एषोऽणुरात्मा चेतस्य वेदितव्यः,' 'वाला-ग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेय' इत्याद्यणुत्वबोधकप्रमाणानि सन्ति। सन्ति च तथा 'स चानन्त्याय कल्पते'

श्लो॥ नित्यस्सर्वगतस्स्थाणुरचलोऽय सनातनः।
तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्॥

लोके सर्वमावृत्य तिष्ठतीत्यादीनि विभुत्वबोधकप्रमाणानि। तथे–श्वरस्यापि

'एष आत्माऽन्तर्हृदयेऽणीय्यान्व्रीहेर्वा 'अणोरणीया' नित्या-
दीन्यणुत्वग्राहकाणि।

'नित्यं विभुं सर्वगतं सुसूक्ष्मम्। महतो महीयान्
श्लो।। त्वया च विष्णुना चाम्ब जगद्व्याप्तश्चराचरम्।'

इत्यादीनि विभुत्वग्राहकाणि बहूनि प्रमाणनि सन्ति। एवं स्थिते जीवस्याणुत्वमेव स्वभावः। ईश्वरस्य विभुत्वमेव स्वभाव इति कथं निर्णेतुं शक्यमिति सौहार्देन पृच्छाम इति चेत् उच्यते—

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति। तेऽर्चिषमभिसम्भवन्ति। अर्चिषोऽहः।

श्लो।। शुक्लकृष्णे गती ह्येते जगतश्शाश्वतो मते।
एकया यात्यनावृत्तिमन्यथा वर्तते पुनः।।

इत्यादिभिर्जीवस्योत्क्रान्तिगत्यागतिप्रतिपादनात्।

'एवमासु तदा नाडीषु गुप्तो भवति ताभिः प्रत्यवसृप्य पुरीतति शेते। सर्वेषु लोकेषु कामचारो भवती'त्यादिभिश्च जीवस्य स्वरूपेण सञ्चरणप्रतिपादनात् हृद्देशावच्छेदेनाहमिति प्रत्ययाच्चाणुस्वरूप एव जीव इति निश्चीयते। जीवाणुत्वप्रतिपादकवाक्ये उपाधिविशेषाश्रवणाच्च। एतैर्बलीयोभिर्वाक्यैर्जीवव्याप्तिवचनानामन्यपरत्वं तत्प्रकारत्वं च।

श्लो॥ 'तस्यात्मपरदेहेषु वेष्टिता नृप सर्वगा'

इत्यादौ सर्वगशब्दः प्रतिवस्तु जीवजातीयस्य यस्य कस्यचि-द्वृत्तित्वं प्रतिपादयति। स चानन्त्याय कल्पत इत्यादावनन्त्य-शब्दः धर्मभूतज्ञानस्य सर्वविषयकत्वरूपविकासविशेषं प्रतिपाद-यति। 'नित्यो व्यापी'त्यत्र व्यापिशब्दस्सर्वचेतनान्तः प्रवेश-योग्यातिसूक्ष्मस्वभावपर इत्यतो व्याप्तिवचनानामन्यपरत्वाज्जी-वाणुत्व सिद्धम्। ईश्वराणुत्वपरवाक्ये अन्तर्हृदय इत्युपाध्यु-क्त्या औपाधिकमणुत्व तस्य। विभुत्वं तु स्वाभाविकम्। 'सत्य' ज्ञानमनन्त, सर्वगत सुसूक्ष्म' इत्यादिषु उपाध्यनुक्तेरत ईश्वरस्य विभुत्व स्वाभाविकम्। न च जीवात्मनोऽणुत्वे पृथिव्याद्यणुव-दप्रत्यक्षत्व स्यादिति वाच्यम्। विभुत्वेऽपिकालादिवदप्रत्यक्ष-त्वापत्तेः। न चास्माक पृथिव्याद्यणूनामप्रत्यक्षत्वम्। स चाय-मात्मा उपाधिवशात्संसरति। स द्विविधः। ससार्यससारी चेति। पुण्यपापादिमान् ससारी। तच्छून्य असंसारी पूर्वोऽपि द्विविधः। नित्यससारी भाविससारविरहवांश्चेति। इतः पूर्वमनन्तकालेषु भाविकालेषु च हेत्वनागमेन संसारविच्छेदसम्भवान्नित्यसंसारी। तत्र प्रमाणन्तु लीलाविभूतिनित्यत्वोक्तिः।

श्लो॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु।
'न क्षमामि कदाचने' त्यादिकमपि तदुत्तम्भकम्॥

श्लो॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि'
इति वीप्सयापि नित्यत्वं सूच्यते।

ननु नित्यसंसार्यभ्युपगमे मोक्षोपाये कस्यापि प्रवृत्तिर्न स्यात्। अहं स किमिति नित्यसंसारित्वसन्देहादिति चेन्न। नित्यसंसारित्वनिश्चयाभावेनाहं किं वा न वेति सन्देहात्पाक्षिकफलभूयस्त्ववाञ्छया संयात्रिकवत् प्रवृत्तिसम्भवात्। अन्यथा क्वचिन्निष्फलयत्नपुरुषदर्शनेन स किमहमिति। कृष्यादावपि न प्रवर्तेत। उपायविधायकशास्त्रार्थनिश्चयात् स्वस्य च तदानुगुण्य–दर्शनान्निस्संशयं क्वचित्प्रवर्तते। एवमनभ्युपगमे सर्वेषां मुक्तियोग्यत्वेऽप्ययमन्त्यमुक्त इदानी मुक्तस्स्यान्न वेति सशयादद्य मुक्तौ कोऽपि न प्रवर्तेत। कृतांशः फलिष्यत्येवेति शास्त्रनिश्चयात् प्रवर्तेत इति चेदेवं नित्यसम्बन्धसद्भावेऽपि स्वस्मिस्तन्निश्चयाभावात् कृतञ्चेत्फलिष्यति इति। किञ्च न प्रवर्तेत। लोकेऽपि हि भाविकाले द्वितीयादिक्षणप्रभृति यस्मिन् कस्मिंश्चित्क्षणे मरणनिश्चयेऽपि स्वस्मिस्तदनिश्चयाद्विवाहादौ सर्वोऽपि प्रवर्तते। एवन्नित्यबन्धे सम्भवति।

श्लो॥ 'अविच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा'

इत्यादिशास्त्रस्यार्थवत्त्वं सिद्ध्यति। अतो नित्यससारिसद्भावं केचिदाहुः। इतरे तु स्वरूपयोग्यानां शुकादिवत्सहकार्यागमनान्मुक्तिस्स्यादेव।

'क्षिपाम्यजस्रं' 'मामप्राप्यैव कौन्तेय' अविच्छिन्नास्ततः मूढा जन्मनि जन्मनो' त्यादीनि विलम्भातिरेकपराणि।

'तदा संसारिपान्थस्य याति मोक्शमंहः श्रमक्शमं'

इत्यादेस्सङ्कोचाभावात्। अतो नित्यसंसारी नास्तीत्याहुः।

ननु निश्शेषात्मापवर्गे कदाचिदीश्वरस्य विहरणविरति-स्स्यात्। तन्निर्वाहाय नित्यसंसार्यभ्युपगमे तस्य निरुपाधिक-कारुण्यभङ्गस्स्यात्। अतः पक्षद्वयेऽपि दोषस्स्यादिति चेन्न। पूर्व-स्मिन् पक्षे विहरणविरते स्वेच्छायत्तत्वान्न दोषः। पुरुषान्तर-प्रतिरोधादिना विहरणविरतौ हि दोषः। स्वेच्छायत्तत्वे तु प्रवृत्तिनिवृत्तेरपि लीलात्वं युज्यते। स्वच्छन्दाचरणस्यैव लीला-त्वात्। उत्तरस्मिन् पक्षे क्वचिन्नित्यम्। दयारोधोऽपि तत्त-ज्जीवकर्मवशात्। अतः प्रतिबन्धरहितेषु सावकाशा कृपाऽल्पव्या-जेनानन्तापराधं सहते। ततस्सनकादिदुर्लभं फलं शुनां पुरोडा-शवद्दधिभाण्डशबरीमालाकारादीनामपि दातुमीष्टे। अतः पक्ष-द्वयेऽपि नानुपपत्तिः। एते च संसारिणः कर्मपाशपाशिताः ब्रह्मा-ण्डकुहरपरिवर्तमानकालघटीयन्त्रकुण्डिकायमानास्तस्मिन् बद्धाः। द्युलोकेषु फलोपभोगक्षीणपुण्याः पुनरिह लोके कर्मभिः पूर्यमाणाश्च सन्त परिभ्रमन्ति। तत्र पुण्यकृतो धूमरात्र्यपरपक्षदक्षिणायन-षण्मासपितृलोकाकाशचन्द्रक्रमेण स्वर्गलोकमधिरोहन्ति। तत्र पुण्यक्षयेऽवरोहन्ति च। चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमे-घादिक्रमेण। तत्र श्रद्धासोमवर्षान्नरेतोमयीनां आहुतीनां होम्य-स्थानानि विद्युत्पर्जन्यपृथिवीपुरुषयोषितः। प्रायिकी च पञ्चमा-हुत्यपेक्षा। द्रौपदीधृष्टद्युम्नप्रभृतिष्वदर्शनात्। एवमपुण्यकृतामपि

स्वेदजादिशरीरेषु पञ्चमाहुत्यभावाच्चन्द्रप्राप्त्यभावाच्च तेषामतिघोरा निरयसरणिर्निरयदुःखानुभूतिश्च पुराणादिषु प्रपञ्चिता वेदितव्या। द्वितीयोऽपि द्विविधः संसारात्यन्ताभाववान् प्रध्वस्तसंसारश्चेति। तत्र कदाचिदपि संसारहेत्वभावात् पूर्वस्य नित्यसूरेरीश्वरवत्तदत्यन्ताभावः। उत्तरस्तूपगादितो मुक्त एव। अनादावपि काले प्रतिदिवसं सहस्रमुक्तावपि न लीलाविभूत्युच्छेदः। अनन्तस्याप्येवस्वभावत्वात्। एवं भोगविभूतेरप्यनन्तत्वम्। अनन्तेष्वपि संसार्यसंसारिषु 'पादोऽस्य विश्वाभूतानि। त्रिपादस्यामृतं दिवि'। इत्याद्युक्तमेकपादत्वत्रिपादत्वतारतम्यमापेक्षिकम्। यथा च मुहूर्ताहोरात्रसवत्सराद्यनन्तेपु सद्द्रव्यपार्थिवघटादिपु चापेक्षिक तारतम्य दृष्टम्। अत एव नित्यानां समस्तबद्धमुक्तापेक्षयाऽप्यनन्तत्वमुपपन्नम्।

केचित्तु नित्यसूरिवर्गं नेच्छन्ति तन्न। 'सदा पश्यन्ति सूरयः' इत्यादिभिः सदा पश्यदनेकद्रष्टृविशिष्टस्थानविधानात्। अत एव न मुक्तप्रवाहेणान्यथासिद्धिः। तेषां सदा सार्वज्ञ्याभावात्। सर्वेषां जीवानां ससारित्वसाधकानि जीवत्वादिलिङ्गानि निरुक्त श्रुतिबाधाद्युपेक्ष्याणि। एतेषा नित्यसूरीणामानन्त्यावान्तरभेदादिकं श्रीपाञ्चरात्रसंहितायां विशदमनुसन्धेयम्। अथ को मोक्षहेतुः? भक्तिरूपापन्नोपासनवेदनध्यानादिशब्दवाच्यः असकृदावृत्तः आप्रयाणादन्वहमनुवर्तमानो ज्ञानविशेषः। न पुनः केवलं तत्त्वज्ञानं तस्याध्ययनविधिसिद्धसाङ्गसशिरस्काध्ययनगृही-

ताक्षरराशिविशेषापातप्रतीतनिरतिशयपुरुषांशसाधनार्थनिर्णय-रागप्राप्तश्रवणमात्रेण निष्पन्नस्याविधेयत्वात्। तत्त्वज्ञाने सत्यपि मोक्षादर्शनाच्च।

ननु 'ब्रह्मविदाप्नोति परं, तमेवं विद्वानमृत इह भवति, ज्ञात्वा देवं मुच्यते सर्वपापैः' इत्यादिषु परमपुरुषवेदनमात्रस्य मोक्षोपायत्वश्रवणात् कथं धान्यादि शब्दवाच्यज्ञानविशेषस्य मोक्षहेतुत्वमुच्यत इति चेन्न।

'आत्मा वारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'ध्यात्वा मुनिर्गच्छति भूतयोनिम्, ध्यायीत, उपासीत'

इत्यादिषु विशेषशब्दश्रवणात्। सामान्यवाचिना सति विशेषे तत्र पर्यवसानस्य छागपशुन्यायलभ्यत्वात्। वेदनज्ञानशब्दानां ध्यान-रूपविशेषपरत्वं युक्तम्। दृश्यते हि—'अग्निषोमीयं पशुमालभेत' इत्यत्र श्रुतस्य सामान्यवाचिनः पशुशब्दस्य छागस्य वपाया-मेदस इति मन्त्रवर्णश्रुतेश्छागरूपविशेषे पर्यवसानम्। तद्वदिहापि ध्यानं हि विजातीयप्रत्ययाव्यवहितानवरतभावात्मकं ज्ञानम्। अतोऽस्य गुरुत्वाल्लघुभूतेन केवलज्ञानेन न विकल्पः। गुरुलघु-विकल्पासम्भवात्। अथास्तु विशेषपर्यवसानम्।

'तथापि मत्वा धीरो न शोचति पृथगात्मानं प्रेरितारञ्च मत्वा। जुष्टस्ततस्तेनामृतत्वमेति।

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥'

इत्यादौ विशेषतश्श्रुते मनने दर्शने वा पर्यवसानं कुतो नेष्यत इति चेदुच्यते। श्रुतार्थप्रतिष्ठापनरूपमननस्य ध्यानोपकारकत्वेन साक्षादुपायत्वाभावात्तत्र न पर्यवसानम्। अत एव 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रवणमनने अपि निदिध्यासन-प्रणाडीरूपे आत्मायते। दर्शनञ्च न चाक्षुषं परमपुरुषे सम्भवति।

'न चक्षुषा पश्यति कश्च नैनम्। न चक्षुषा गृह्यते नापि वाचा।
यत्तदद्रेश्यमग्राह्यम्। अदृश्ये नात्म्ये निरुक्ते'

इत्यादिभिश्चाक्षुषज्ञानविषयत्वप्रतिपादनात्। किन्तु निदिध्यास-नान्वयिदर्शनसमानाकारत्वमेव तस्मिन् दृष्ट इत्यनेनोच्यते। अनुभूयते ह्यनवरतभावनाविशेषवशाद्ध्यानस्य दर्शनसमानाकार-कत्वं 'वृक्षे वृक्षे च पश्यामी' त्यादौ। तथाच तस्मिन् दृष्ट इत्या-दौ दर्शनसमानाकारध्यानविधिपर्यवसानेन केवलदर्शनस्य पर-मपुरुषविषयस्यासम्भवेन तत्र पर्यवसानासङ्गतेः। अथात्र द्रष्टव्य इत्यनेन दर्शनसमानाकारकत्वं निदिध्यासितव्य इत्यनेन ध्यानं च विधीयत इत्युच्यते। उत 'उभाभ्यां पदाभ्यां दर्शनसमानाकार-त्वविशिष्टध्यानं विधीयत इति वा। नाद्यः दर्शनसमानाकारत्वस्य ध्यानान्वये हि दर्शनसमानाकारध्यानलाभस्स्यात्। तथान्वये तयोराकाङ्क्षादिविरहात् विधिप्रत्ययप्रकृत्यर्थस्य विधि-

प्रत्ययान्तरप्रकृत्यर्थेन सह भेदेन वा अभेदेन वा अन्वया- सम्भवात् । न द्वितीयः । तव्यप्रत्ययद्वयश्रवणविरोधात् । 'न चाग्नये पथि कृते पुरोडाश' मित्यत्र चतुर्थीद्वयश्रवणेऽपि पथिकृत्वविशिष्टाग्निदेवत्वप्रतिपत्तिवदिहापि पदद्वयेन विशिष्टलाभ इति वाच्यम् । तत्र विशेष्यचतुर्थ्यैव विशिष्टदेवताविधानेऽपि विशेषणवाचकपदस्य विशेष्यवाचकपदसमानविभक्तिकत्वस्य साधुत्वार्थकत्वेन तथा प्रयोगसम्भवेऽपि प्रकृते तव्यप्रत्ययद्वयोपादान-वैयर्थ्यं दुर्वारमेवेति चेन्मैवम् । 'अर्धमन्तर्वेदिमिनोति अर्धं बहिर्वेदि' इत्यत्र वाक्यद्वयेन देशविशेषलक्षणा वक्तव्या तव्यप्रत्ययान्तपदद्वयेन विशिष्टलक्षणया विशिष्टविधिसम्भवेन विरोधाभावात् । एवमार्षेयं वृणीते त्रीन् वृणीते इत्यत्र त्रित्वविशिष्टार्षेयवरणस्यैकस्य विधानेऽपि वाक्यद्वयश्रवणवदत्रापि तव्य-प्रत्ययद्वयश्रवणोपपत्तेः । अथ तत्रैकमेव लक्षणया विशिष्टविधायकमितरदनुवादकमिति चेदिहापि तथैव स्यात् । अत एव स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः । तस्मिन् दृष्टे परावर इत्यादिनाऽव्यवहितोपायतया ध्रुवानुस्मृतिदर्शनयोर्निर्देशो न विरुध्यते । अन्यथाऽष्टदोषदुष्टविकल्पप्रसङ्गात् । अतो दर्शनसमानाकारध्यानस्यैव मुक्त्युपायत्वेन तत्रैव वेदनज्ञानादिशब्दानां पर्यवसानमिति सिद्धम् ।

यद्यपीदमात्मा वाऽरे इति वाक्यं मैत्रेयीब्राह्मणगतं तथापि सर्वविद्यावेद्यकारणब्रह्मविषयध्यानस्य दर्शनसमानाकारत्वप्रतिपादकमेव ।

'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवतीति'

तत्रत्येनैव वाक्येन कारणविषयध्यानमात्रस्य दर्शनसमानाकारता प्रतिपादनात्। कारणमेव हि सर्वविद्याधेयम्। कश्च ध्येय इत्युपक्रम्य 'कारणन्तु ध्येय' इत्युपसंहारात् कारणविषयकं ध्यानं दर्शनसमानाकारमिति गम्यते। तस्मात् सर्वविद्यावेद्यकारणविषयध्यानं दर्शनसमानाकारमिति लब्धम्। केवलं कर्मज्ञानसमुच्चित्तं वा न मुक्तिहेतुः। 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था अयनाय विद्यते इत्यनेन वेदनमेव विधाय उपायान्तरनिषेधात् कर्मण विध्याङ्गत्वे तु न विरोधः। तथा सति तस्योपायान्तरत्वाभावात्। परमात्मसाक्षात्कारविरोधि रजस्तमोमूलसांसारिकपुण्यपापरूपप्राचीनकर्मनिर्मथनकृतचित्तशुद्धिद्वारेण हि तदा तदुपयोगः। एतेन विशिष्टदेशवासव्रतविशेषवैष्णवसंश्रयादेर्ज्ञानयोगकर्मयोगयोश्च परम्परया मोक्षहेतुत्वमिति सिद्धम्।

'यजमानेन सहिताः स्वर्गं यान्ति नराधिपेति'

महाभारतवचनमपि परम्परया मोक्षसाधनपरम्। कर्मयोगज्ञानयोगयोश्च वक्तव्यमखिलं श्रीमद्गीताभाष्ये व्यक्तमुक्तम्। अथाप्यत्र निष्कृष्टांश उच्यते। भक्तियोगः परमात्मप्राप्त्युपायभूतः। तदशक्तस्य भक्तियोगसिद्ध्यर्थमात्मावलोकनमपेक्षितम्। तस्य च ज्ञानयोगकर्मयोगौ द्वौ पृथगुपायौ। तत्र ज्ञानयोगस्वात्मावलोकनेऽन्तरङ्गः। तथापि प्रथमं सुदुष्करः। तदनधिकरणस्तुल्यफल-

कर्मयोग एव कार्यः। तदधिकरणोऽपि व्यपदेश्यस्य लोकसङ्ग्रहार्थं कर्मयोग एव कार्यः। अशक्तस्य ज्ञानयोगशक्तिं कर्मयोग एवोत्पादयति। ज्ञानयोगाशक्त्या कर्मयोगमनुतिष्ठत अन्तःकरणशुद्धिवशात् मध्ये ज्ञानयोगशक्तिप्रादुर्भावे सत्यव्यपदिष्टस्य कर्मयोगं परित्यज्य ज्ञानयोगमनुतिष्ठतोऽपि न दोषः। इमौ च योगौ कस्यचित्कामनाभेदेन कैवल्यमात्रसाधकौ। यथा भगवदुपासनमेव कस्यचिदैश्वर्यादिकं साधयति। त्रयाणामपि योगनामाश्रमधर्माङ्गकत्वं तु तुल्यम्। प्रवाहस्नानादिपुण्यपापरूपकर्मतारतम्येन शक्त्यशक्तिकामनादिना गन्तव्यमिति न कश्चिद्दोष इत्यतास्सिद्धं भक्तिरेव साक्षान्मोक्षोपाय इति। महनीयविषये प्रीतिर्भक्तिः। सेवावस्थाभेदात्परभक्तिपरज्ञानपरमभक्तिभेदं भजते। परभक्तिर्नाम निरुक्तमोक्षोपायः। परज्ञानन्नाम—

श्लो॥ 'योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम्'

इत्येत्र रूपोत्कटदिदृक्षापर्यवासायिध्यानविशेषः। परिपूर्णसाक्षात्कारलाभे सति तादृशानतिशयभोग्यभगवत्स्वरूपसाक्षात्कारजनितभगवत्प्राप्तित्वराहेतुभूतः प्रीतिविशेषः परमभक्तिः। नमस्कारादिषु भक्तिशब्दप्रयोगः

श्लो॥ 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥'

इत्यादेर्भक्तिकार्यत्वात् गौणः। सा च भक्तिस्सदक्षरमधुदहर-

भूमवैश्वानरादिविद्याभेदाद्बहुविधा गुणोपसंहारपादे निपुणमनुसन्धेया। एतास्सर्वा विद्यास्तत्तच्छास्तोदिततत्तद्वर्णाश्रमधर्मनिष्ठत्रैवर्णिकमनुष्यदेवासुरादिसाध्याः। स्त्रीणां विधुराणामपि जपोपवासाद्यङ्गाधिकृतानां ब्रह्मविद्याधिकारोऽस्त्येव।

'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज' इत्यादिकं त्वनाश्रमित्वादाश्रमित्वस्य ज्यायस्त्वपरम्। नैष्ठिकादिपरिभ्रष्टानामनधिकार एव।

श्लो॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा।।' इति स्मृतेः।

शिष्टबहिष्कारादितः कृतप्रायश्चित्तानामपि तेषां ब्रह्मविद्याधिकारो नास्त्येव। किन्तु प्रायश्चित्तेन तेषां नरकादिप्राप्तिर्निवार्यते। न कर्मान्तरारम्भयोग्यता।

ननु संवर्तादिमहायोगिनां सर्वाश्रमबहिष्ठनग्नचर्यास्मरणात् 'अत्याश्रमिभ्यः परमं पवित्र' इति श्रुतेश्चाश्रमधर्माणां विद्यानङ्गत्वमिति चेन्न। तेषामुन्मत्तचर्यायाः

श्लो। 'जनेनावमतो योगी योगसिद्धिं स विन्दति'

इति जनावमानजनितयोगसिद्ध्ये स्वोत्कर्षप्रच्छादनार्थत्वात्। यद्वा योगदशायां बहिरप्रमुक्तमनसां न धीपूर्वककर्मत्यागः। तेषां भगवदनुभवव्यतिरिक्तकालाद्यपरिज्ञानेन तन्निमित्तकर्तव्य-

कर्मणो धीविषयत्वाभावात्। अबुद्धिपूर्वकं त्वारम्भकालेऽपि न निष्पतीति नियमितम्। किमुत समाधौ। किञ्च कर्मणां विद्याङ्गत्वादङ्गाङ्गिविरोधे अङ्गिनाङ्गोपमर्दो न दोषायेति तेषां कदाचित्कर्मत्यजनं न विद्याङ्गत्वविरोधि। अत्याश्रमिभ्य इति श्रुतिर्नाश्रमधर्मत्यागपरा। किन्त्वशयिताश्रमयोगपरा। तथा सत्यत्याश्रमेभ्य इत्यनेन सामञ्जस्ये मत्वर्थीयप्रत्ययवैयर्थ्यं स्यात्।

अतः कर्मणां स्वरूपत्यागासम्भवात् फलसङ्गत्यागपरमेव कर्मत्यागपरवचनानां वाच्यमिति। तत्र केचित्तुर्याश्रमस्यैव विशेषतो मोक्षाश्रमत्वाभिधानात् तद्वतां वेदानुवचनयज्ञादिरूपप्रवृत्तिधर्माभावात् शमादिरूपनिवृत्तिधर्मसम्भवाच्च प्रव्राजिनामेव मुक्तिस्तत्साधनी विद्या च नान्येषामित्याहुः। तदसत्। त्रयो धर्मस्कन्धा इत्यत्र ब्रह्माश्रमप्रस्तावे ब्रह्मसंस्थोऽमृतत्वमेतीत्युच्यते। ब्रह्मसंस्थत्वं ब्रह्मनिष्ठत्वम्। तच्चाधीतवेदान्तेषु सर्वेषु आश्रमेषु सम्भवति। तच्च गृहस्थानामप्युषस्ति याज्ञवल्क्य प्रभृतीनामुपनिषत्सु प्राचुर्येण दृश्यते। न प्रवृत्तिनिवृत्त्योर्विरोधः। भिन्नविषयत्वात्तयोर्नित्यनैमित्तिकेषु प्रवृत्तिः निषिद्धकाम्यनिरर्थकेषु कर्मसु निवृत्तिः। अन्यथा प्रव्राजिनां प्रवृत्तिरूपस्वाश्रमधर्मेणापि विरोधस्स्यात्।

किञ्च छान्दोग्ये 'कुटुम्बे शुचौ देशे' 'इत्यादिना गृहस्थं प्रक्रम्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इत्युक्त्वा 'न च पुनरावर्तते' इति चोक्तम्।

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।'

गृहस्थोऽपि विमुच्यत' इत्यादिस्मृतेः । जनकदिलीपाद-यश्च गृहस्था मुक्ता इति इतिहासादिषूच्यन्ते । अत एव न सोपानवत् क्रमनिबन्धोऽपि, प्रव्राजिनां मोक्षाश्रमित्वकीर्तन योग्यताधिक्यमात्रादिति नानुपपत्तिः । अतस्सर्वाश्रमिणां ब्रह्मविद्याधिकारः ।

काम्यान्नित्यसिद्धिः —

अथ नित्यानामाश्रमधर्माणां कथं काम्यरूपविद्याङ्गत्वम् । नित्यत्वे ह्यकरणे दोषः । काम्याङ्गत्वे तु स नास्ति । अतो विद्याया आश्रमधर्माङ्गत्वमनुपपन्नमिति चेदुच्यते । एकस्यैव कर्मणः विनियोजकवाक्यभेदेन नित्यकाम्यस्वरूपत्वमविरुद्धम् । 'यथा यावज्जीवमग्निहोत्रं जुहोति, अग्निहोत्रं जुहुयात् स्वर्गकामः' इति विनियोजकभेदेनाग्निहोत्रस्य नित्यकाम्यस्वरूपत्वम् । यथा सन्ध्यावन्दनादेर्नित्यस्य प्राजापत्यादिलोकफलकत्वेन काम्यत्वं नित्यत्वञ्च । तथाऽश्रमधर्माणां 'यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ती' ति विद्यायां विनियोगाद्विद्याङ्गत्वमप्युपपन्नम् । तर्हि विदुषामाश्रमार्थं विद्यार्थञ्चाश्रमधर्माणां द्विरनुष्ठानं प्रसज्यत इति चेन्न । अत्र कालाद्यभेदे तन्त्रेणानुष्ठानस्यैकादशे स्थापितत्वात् । उभयार्थं सकृदनुष्ठानं तन्त्रम् । अतो विदुषामेकेनानुष्ठानेनार्थद्वयसिद्धिः । अत्रेदं तत्त्वम् । तन्त्रानुष्ठा-

प्रसक्तौ विद्यारूपफलोद्देशेनानुष्ठानेऽकरणनिमित्तदोषाभावेनाश्र-
धर्मस्सिद्धयत्येव। आश्रमधर्मस्यानुष्ठितत्वात्। दोषपरिहाराय
रणे तु विद्याफलं न सिद्धयति। तदुद्देशेनाकरणात्। काम्यं
र्म हि तत्तत्फलोद्देशेनानुष्ठितं सदेव फलं जनयति। अत एव
र्गफलसाधनज्योतिष्टोमादेः स्वर्गार्थमनुष्ठितस्यापि न पुत्रादि-
लजनकत्वम्। तदुद्देशेनानुष्ठानाभावात्। अतः फलार्थमनुष्ठाने
न्त्रेण नित्य सिध्यति। अयमर्थ आचार्यैः —

श्लो॥ फलार्थं क्रियमाणेऽपि नित्यं भवति तन्त्रतः।
नित्यकामस्वरूपैक्ये विनियोगपृथक्त्वतः॥
यन्नित्यं तत्र काम्यं तदपि न तदिति स्थापिते कर्मभेदेऽ
प्येकं विद्याश्रमाङ्गं भवति हि विनियुक्त्यन्तरेणोपपत्तेः।
अत्रानुष्ठानतन्त्रं विदुषि हि घटते कर्तृकालाद्यभेदात्
प्राजापत्यादिलोकार्थिनि च तदितरोऽनर्थरोधाय तद्वान्॥

त्यन्वग्राहि। तथाच य एवाग्निहोत्रदर्शपूर्णमासपञ्चमहायज्ञादय
ाश्रमधर्मास्त एव विदुषा विद्यानिष्पादकाः। अत एव सकृद-
ष्ठानेनार्थद्वयसिद्धिरिति। अथैवमपि ब्रह्मणैकान्त्यभाजामेव
ोक्षधर्मेऽपवर्गः कथ्यते।

कान्त्यश्चानन्यदेवताकत्वम् :—

श्लो॥ 'तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवता' इति।
थापनात्तत्रैव प्रतिबुद्धस्तु मोक्षभागिति नियमितम्।

श्लो॥ 'ब्रह्माणं शितिकण्ठञ्च याश्चान्या देवता स्मृताः।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितिं फलम्'॥

इत्यनेन च तत्सिद्धम्। पञ्चमहायज्ञादयस्तु अग्नीन्द्रादिनानादेवतेज्यरूपाः। अतस्तेषामैकान्त्यभञ्जकत्वात् तदङ्गविद्यानुष्ठानं कथमिति चेदुच्यते। अग्नीन्द्रादिशब्दानामैन्द्रीन्यायेन प्रतर्दनविद्यान्यायेन च परमात्मपरत्वेनैकान्त्यविरोधाभावात्। 'ऐन्द्रया गार्हपत्यमुपतिष्ठत' इति विनियोगादिन्द्रप्रकाशकमन्त्रस्य कदाचन स्तरीरसीत्यस्य गार्हपत्योपस्थापनाङ्गत्वे सिद्धे मन्त्राणामनुष्ठेयार्थप्रकाशकत्वेनोपयोगस्य वक्तव्यतया इन्द्रशब्दस्यावयवशक्त्या गार्हपत्यपरत्वं स्वीकृतम्। तद्वत्पञ्चमहायज्ञादिष्वग्नीन्द्रादिशब्दानामवयवार्थपौष्कल्येन परमात्मपरत्वम्। तत्रैवानन्यथासिद्धजीवलिङ्गबोधकेऽग्नये स्विष्टकृत इन्द्राय वज्रिण इत्यादावयवशक्त्या परमात्मपरत्वे स्विष्टकृत्वादिविशेषणानन्वयात् श्रुतहानप्रसक्त्या प्रतर्दनन्यायेन स्विष्टकदग्न्यादिविशिष्टपरमात्मपरत्वं स्वीक्रियते। तत्र विशेषणेऽग्न्यादौ स्विकृत्वादिविशेषणान्वयात्। तथा च क्वचिदवयवशक्त्या क्वचिदपर्यवसानवृत्त्या च अग्नीन्द्रादिशब्दानां परमात्मपरत्वान्नारायण एव सर्वकर्मसमाराध्य इत्यनन्यदेवताकत्व निरङ्कुशमित्याश्रमधर्माङ्गकत्वं विद्याया अविरुद्धम्। अधिकमस्मत्पितामहपादैः श्रीकृष्णदेशिकैः कृताया' नित्यानुष्ठानदीपिकायामनुसन्धेयम्, आहुश्चाचार्याः —

श्लो॥ 'परविद्यासु जीवोक्तिनिरुक्त्यादेः पराश्रया।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी॥'

'क्वचिदगतिहतारूढिरैन्द्रीनयेन'
'तल्लिङ्गानन्यथासिध्यधिगमनवशा
तद्विशिष्टे विवक्षा' इति।

एतेनैकान्तिनां विदुषामग्नीन्द्रादिनानादेवताकवर्णाश्रमधर्मानुष्ठानं न सम्भवति। ऐकान्त्यविरोधात्। ते तु धर्माः केवलाश्रमिभिरेवानुष्ठेयाः। एकान्तिभिस्तु भगवदसाधारणमन्त्रैरेव सर्वकर्मानुष्ठेयमिति कैश्चिदुक्तन्निरस्तम्। तथासति कर्मणां द्वैरूप्येण सकृदनुष्ठानेनार्थद्वयासिद्धेः। चतुर्विधाश्रमातिरिक्तैकान्त्याश्रमस्यानुक्तत्वात् तेषामाश्रमधर्मानुष्ठाने 'यज्ञेन दानेनेत्यादिना विनियुक्तयज्ञाद्याश्रमधर्माङ्गकत्वं विद्याया अधिकारो न स्यादिति सर्वसंक्षोभप्रसङ्गात्।

उपासनात्रैविध्यम् :-

तच्चोपासनं त्रिविधम्। चिद्विशिष्टब्रह्मोपासनम्, अचिद्विशिष्टब्रह्मोपासनम्, परिशुद्धब्रह्मोपासनञ्चेति। ब्रह्मणश्चिद्विशिष्टत्वम्, चिच्छरीरत्वम्। तत्र जीवात्मनो ब्रह्मशरीरत्वेन ब्रह्मणश्चेतनशरीरत्वेन वोपासनं चिद्विशिष्टब्रह्मोपासनम्। विशेषणविशेष्यभावव्यत्यासेऽपि द्वयोः ब्रह्मोपासनत्वेन द्विविधस्यापि मोक्षहेतुत्वात्। एतान्येवाप्रतीकोपासनानीत्युच्यन्ते। प्रतीकोपासनन्तु न मोक्षहेतुः। तच्च स्वातन्त्र्येण चिदुपासनम्। ब्रह्मदृष्टया चिदुपासनम्। स्वातन्त्र्येणाचिदुपासनञ्चेत्यादि। एषामर्वाचीनफलसाधनत्वमेवेति द्रष्टव्यम्। आहुश्चाचार्याः —

श्लो।। 'विश्वान्तर्यामि स्वयमिह' इति।

ननु गोपिकादेरपि मोक्षः श्रूयते। तत्कथं त्रैवर्णिकत्वं नियमो विद्याया इति चेन्न। प्राचीनेषु ब्राह्मणादिशरीरेष्वेव कृतोपायत्वात्तेषां प्रारब्धकर्मणा निकृष्टशरीरप्राप्तेः। प्रारब्धस्य कर्मणः विद्यायाऽनिवृत्तेः प्रारब्धाधिकत्वाद्बन्धस्य। ततः यास्मिन् कस्मिन्नपि शरीरे फलं भवतीति न दोषः। एवं विदुरादयोऽपि भवान्तरसम्पादितोपायास्तत्तत्संस्कारा हि तज्ज्ञानिनश्चेति नाप-शूद्राधिकरणविरोधः। स्मरन्ति च—

श्लो।। 'धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते।
वर्णावरत्वे सम्प्राप्तास्संसिद्धिं श्रमणी यथा।।' इति

शुश्रूषोर्जनश्रुतेश्शूद्रेत्यामन्त्रणं सञ्जातशोकवशत्वात्। न शूद्रत्वादि-जातियोगात्। शुचेर्दश्चेत्यौणादिकरप्रत्ययेन शूद्रशब्दस्य शोचितृपरत्वात्। अत्रेदं बोध्यम्। अग्निविद्यासाध्ययज्ञादिवर्णाश्रम-धर्माङ्गकत्वाद्विद्यायास्त्रैवर्णिकाधिकारत्वमेव। अतो ब्राह्मणादि-शरीरेष्वेवारम्भः। विद्यायोनिशरीरावसानपर्यन्तम्। साऽहरहर-भ्यासाधेयातिशया सत्यन्तिमप्रत्ययमुत्पाद्य फलं जनयति। कस्य-चित् प्रारब्धकर्मसद्भावे तस्य भोगेनैव क्षपयितव्यत्वाद्यावता जन्मना प्रारब्धस्य कर्मणो नाशस्तावता जन्मना भोगेन तन्ना-शयित्वा तत अन्तिमप्रत्ययमुत्पादय फलं जनयति। विद्याया आरम्भशरीर एव निष्पत्तावपि प्रारब्धेन कर्मणा प्रतिबन्धात्फलं

विलम्ब्यते। प्रतिबन्धकाभावस्य फलोत्पत्तावपेक्षितत्वात्। अत एव निष्पन्नस्यापि पुत्रेष्ट्यादेः पुत्रोत्पत्तिप्रतिबन्धकसत्वे कालान्तरे पुत्रोत्पत्तिः फलमिति तन्त्रिकैस्सिद्धान्तितम्। प्रारब्धनाशे सति विद्यान्तिमप्रत्ययमुत्पाद्य फलं जनयतीति। अत्र केचिद्विद्यायोगिशरीरे एव निष्पत्तिरिति न नियमः। तच्छरीरावसरे प्रारब्धकर्मणि सति अन्तिमप्रत्ययादर्शनात्। अन्तिमप्रत्ययावधिकत्वाद्विद्याया प्रारब्धावसान एवान्तिमप्रत्ययजननात्। अतोऽन्तिमप्रत्ययानन्तरमेव विद्यानिष्पत्तिः। ततः फलमिति वदन्ति। तेषां पक्षे अथ च जन्मादिहेतुरेव कर्मविशेषः शापादिर्वोपनिपतितः। तदा तेन तत् प्रसज्यत एव। तथापि निष्पन्नोपायस्य न शैथिल्यम्। स तु प्रारब्धकर्मण इवैतस्यापि पर्यवसाने संसारान्निवर्तयति। न च पुनरुत्तरोत्तरकर्मकरणात् ससारविच्छेद इति वाच्यम्। शास्त्रविरोधात्। निष्पन्नस्योपासनस्य निष्फलत्वप्रसङ्गादिति न्यायसिद्धाञ्जनश्रीसूक्त्यस्वारस्यम्।

एव श्लोकः प्रारब्धकर्मावधिको मोक्ष इत्थमुपासितुः।
दृप्तस्य देहावधिक आर्तस्यात्यवधिर्मतः॥ इत्युत्तरग्रन्थास्वारस्यञ्च।

तत्र निष्पन्नोपायानामेव हि त्रयाणां फलविलम्बहेतुरुच्यते। न तूपायनिष्पत्त्यवधिः। उपायस्यैवानिष्पत्तौ कारणाभावेन मोक्षरूपकार्यासम्भवेन तद्विहाय फलप्रतिबन्धकविशेषाभिधाना-

सङ्कत्यापत्तेः। एब पक्षावृत्तित्वव्याप्त्योरन्यतरस्यापि सन्देहे सन्दिग्धोपाधिः। तत्राद्यो यथा। विप्रतिपन्नो जीव एतच्छरीरावसाने मुक्तिमान् निष्पन्नसमाधित्वात् शुकादिवदित्यत्र कर्मात्यन्तपरिक्षयः उपाधिः। स च निष्पन्नसमाधौ विप्रतिपन्ने जीवेऽस्ति नास्तीति सन्दिग्धत्वाच्छङ्कितोपाधिः। यद्यपि योगिनामुत्तरपूर्वाघयोरश्लेषविनाशौ भवतः। तथापि प्रारब्धकर्मणामेकशरीर एव पर्यवसानमिति न नियमः। निष्पन्नोपायस्यापि प्रतिबन्धककर्मविशेषादनेकदिवसस्थितिवदनेकशरीरपरिग्रहोपपत्ते। तथाच सूत्रितम् 'भोगेन त्वितरे क्षपयित्वाथ सम्पद्यत' इति यावदधिकारमवस्थितिराधिकारिणामिति च। विनिष्पन्नसमाधेस्तु मुक्तिस्तत्रैव जन्मनीत्यादिस्मृतिस्त्वनिष्पन्नसमाधेरशरीरान्तरयोगनियमपरतया प्रायिकविषया। अतो नास्य साधनव्यापकत्वमिति श्रीन्यायपरिशुद्धिविरोधश्च। ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादित्यनेनाभ्युदयफलविद्यायास्स्वसाधनभूतपुण्यकर्मान्तरोत्पत्तिमाशङ्क्य प्रबलकर्मान्तराप्रतिबन्धे सत्यनन्तर प्रतिबन्धे सति कालान्तर इत्यनियममभ्युपगम्य 'एवं मुक्तिफलानियमस्तदवस्थावधृतेरित्यनेन मुक्तिसाधनविद्याया अपि स्वसाधनीभूतातिशयितकर्मभिरुत्पत्तौ प्रतिबन्धकसद्भावासद्भावाभ्यामनियमः श्रीभाष्ये प्रतिपादितः। सोऽपि विरुद्ध्यते। साधननिष्पत्तौ सत्यामपि प्रतिबन्धकवशात्फलविलम्बाभ्युपगमात्।

नन्वत्र विद्योत्पत्तौ निष्पन्नानामपि स्वसाधनानां प्रति-

बन्धकाधीनविद्योत्पत्तिविलम्बः स्वीकृतः न तु निष्पन्नायाः फलविलम्ब इति न विरोध इति चेन्न। न्यायसिद्धाञ्जने निष्पन्नोपासनस्य निष्फलत्वप्रसङ्गात्। सूत्राभिप्रेतञ्चैतत्। एवं मुक्तिफलानियमस्तदवस्थावधृतेः। इदं सूत्रं विद्याङ्गकर्मविषयमपि विद्यायामपि तुल्यन्यायतयाऽनुसन्धेयमित्युक्त्या-निष्पन्नोपासनस्यापि प्रतिबन्धकवशात् फलविलम्बप्रतिपादनात्। तथा च पुत्रेष्ट्यादिवत् विद्योत्पादककर्मवच्च निष्पन्नविद्यया अपि प्रारब्धकर्माधीनफलविलम्बस्सह्यः। सूक्त्यन्तरञ्च विस्तरभयान्नप्रदर्श्यते। अतः पूर्वोक्त एवार्थः। अनधिकृतविद्यानां शूद्राणां प्रपत्त्यैव मोक्षः। तस्यास्सर्वाधिकारत्वात्।

श्लो॥ शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥

इत्यादिप्रमाणात्। एव फलाभिसन्धिरहितस्वकर्मानुष्ठानेन ब्राह्मणादिजन्मप्राप्त्या तत्र विद्योत्पत्त्या वा क्रमेण मोक्षो भवति।

विदुरगोपिकादीनां तु पूर्वजन्मप्राप्तविद्यया मोक्ष इत्युक्तम्। अध्यवसायादिविशेषविशिष्टा न्यासविद्या। तस्या अपि बुद्धिविशेषत्वात्। भक्तिविशेषत्वाच्च। 'नान्यः पन्था अयनाय विद्यते' 'भक्त्यात्वनन्यया शक्य' इत्यादिभिर्न विरोधः।

श्लो॥ साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः।
साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते॥
उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः।
उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी॥
उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी॥

इत्यादिप्रमाणमप्यनुसन्धेयम्।

प्रपत्तिः –

साध्या भक्तिः यया सा साध्यभक्तिः प्रपत्तिरित्यर्थः। एतस्या अपि शब्दान्तरादिभिस्सद्विद्याभेदवद्भेदे सिद्धे सर्ववेदान्तप्रत्ययन्यायात् सर्वप्रपत्तिप्रकरणपठितगुणोपसंहारेण पौष्कल्ये सिद्धे विकल्पो विशिष्टफलत्वादिति न्यायेन विद्यान्तरसमुच्चयप्रसङ्गाभावः। सर्ववेदान्तप्रत्ययन्यायो हि एकस्या वैश्वानरविद्याया नानाशाखास्वाम्नातोया फलसंयोगरूपचोदनासंज्ञाद्याविशेषेण सर्वत्रैकस्या एव प्रत्यभिज्ञायमानतयैक्यावगमेन नानाशाखागताङ्गोपसंहारेण सर्वाङ्गोपेततद्विद्यानुष्ठापकः। ननु फलवैषम्याभावे लघूपाये सति गुरूपायविधानमनर्थकमिति चेन्न। तादृशाध्यवसायादेर्दुष्करत्वेन गौरवाविशेषात्। तथोक्तं प्रपत्तिप्रकरणे—

श्लो॥ 'उपायस्सुकरस्सोऽयं दुष्करश्च मतो मम' इति।

यथा च कश्चिन्महता प्रयासेन अर्थं सम्पादयति। स्खलने च यथोचितं दण्ड्यते। अपरस्त्वन्तरङ्गसेवाक्षमः। अल्पायासेन तावदधिकं वा अर्थं सम्पादयति। किञ्च स्खलने सह्यते। महत्स्वप्यपराधेष्वल्पदण्डो भवति। तत्रापि मन्दभाग्यानामन्तरङ्गसेवा दुर्लभेति वेदिहापि तथैव। यथोपायभक्तिष्वेव तत्तच्छाखाभेदेन वर्णाश्रमभेदेन चाङ्गभूतानां कर्मणां गुरुलघुतारतम्येऽपि फलमविशिष्टं तथेहापि। उपायभक्तौ नित्यनैमित्तिककर्मणां फलाभिसन्धिरहितकाम्यकर्मणाञ्चाङ्गत्वेनानुष्ठानं, न पुनस्स्वातन्त्र्येण। निषिद्धवर्जनं द्वयोरपि भक्त्योस्समानम्। साध्यभक्तौ तु काम्यानां स्वरूपतोऽपि त्यागः। न तु नित्यनैमित्तिकानाम्।

नन्वङ्गिन प्रहाणात्तदङ्गानां तेषामपि परित्याग एवेति चेन्न। अङ्गत्वेनाननुष्ठानेऽपि विहितत्वाच्चाश्रमकर्मापीति न्यायेन यावदाश्रमं तत्परित्यागासम्भवात्। तदेतन्नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते। इत्यादिना विवृतम्। यत्तु परित्यक्तसकलवर्णाश्रमधर्माः केचित्सवर्तभरतविदुरादयः ब्रह्मविदस्सञ्चरन्तीति यथेष्टकरणकौतुकिनां प्रलपितं तदसत्। तत्तत्प्रकरणेष्वेव जडवदाचरणेन ज्ञानं सिध्यतीत्यभिसन्धिमात्रेण ते तथा कुर्वन्निति स्फुटप्रतीतेः।

श्लो॥ 'बाल्येन तिष्ठासेत् जडवल्लोकमाचरेत्। सतां मार्गमदूषयन्'

इत्यादीनां पर्यालोचनात्। बाल्यञ्च शक्तिविद्याभिजनाद्युत्कर्षाणां

सतामनाविष्करणमेव। न तु कामचाराभक्ष्यभक्षणादि। अन्यथा नाविरतो दुश्चरितात्। वर्णाश्रमाचारवता इत्यादिप्रमाणव्याकोपप्रसङ्गात्। अथ ब्रह्मविद उत्तरपूर्वाघयोरश्लेषविनाशप्रकारस्सुहृद्द्विषत्सङ्क्रमणप्रकारश्चोच्यते। समधिगतविद्यानां भुक्तफलकृतप्रायश्चित्तप्रारब्धकर्मव्यतिरिक्तं प्राचीनं कर्म उपायप्रभावादेवाग्निप्रोतषीकातूलवत प्रदूयते। उत्तरञ्चाबुद्धिपूर्वकं पुष्करपलाश आप इव न श्लिष्यति। पुण्येऽपि विद्यानुकूलव्यतिरिक्तांशस्य मोक्षविरोधित्वाविरोधित्वाविशेषादनिष्टफलतया पापशब्दाभिलप्यस्याश्लेषविनाशावेव।

श्लो॥ 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि'

इत्यादिकं तु विद्यामाहात्म्यजनिताश्लेपविनाशविषयकर्मव्यतिरिक्तविषयम्। प्रारब्धं तु भ गेनैव क्षीयते। प्रारब्धकर्मणश्च न तद्देहपातावधिकत्वनियमः। कर्मणां विचित्रफलत्वात्। अस्माच्छरीरात्समुत्थायेत्यादेरन्तिमशरीरविषयत्वात्। तत एवान्तिमशरीरनिवृत्तौ देशकालनियमाभावोऽपि सिद्धः। एवं बुद्धिपूर्वमुत्तरमपि भोगेन प्रायश्चित्तेन वा क्षीयते। न चैष प्रायशः विद्याननुकूलं पुण्यपापञ्च बुद्धिपूर्वं करोति फलाभिसन्धियुक्तकर्मणः विद्याविरोधित्वात् फलान्तरेषु च विरक्तत्वात्। पापे त्वीश्वराज्ञातिलङ्घनभयान्न प्रवर्तते। यदि च बुद्धिपूर्वं प्रवर्तते तदा भीतः स्वयमेव तदुचितं प्रायश्चित्तं करोति। यदि न करो

तदा तत्फलं प्रारब्धावसानात् पूर्वमेव यथाकथञ्चित्फलति। न तु जन्मादिप्रयोजकं भवति। तथा च भुक्तफलकृतप्रायश्चित्तव्यतिरिक्ता. प्राचीनपापपुण्यराशयः विनाशविषयाः। अबुद्धिपूर्वोत्तरपापपुण्यराशयः अश्लेषविषयाः इति निष्कर्षः।

नन्वेवं समस्तपलये साधुपापकृत्ययोर्हानं सुहृद्द्विषदुपायनञ्च कथं घटते? तथाहि न तावत् पूर्वकृतयोः पापपुण्ययोः। तत्र केषाञ्चित्कर्मणां दत्तफलत्वात्। केषाञ्चित्प्रायश्चित्तविद्याभ्यां विनष्टत्वात्। फलवत्तयोरपि कर्मस्वरूपनिवर्तकत्वात्। केषाञ्चित्प्रारब्धफलकर्मणः भोगेनैव क्षपितत्वात्। एवमुत्तरकृतानामबुद्धिपूर्वकानाञ्चाश्लिष्टत्वात् विद्यानुकूलानाञ्च विद्ययैव फलभूतया निवृत्तत्वादिति चेदत्रोच्यते। दत्तफलमदत्तफलञ्चेति पूर्वाघं द्विविधम्। अदत्तफलमपि प्रायश्चित्तविनष्टमविनष्टञ्चेति। अविनष्टमपि प्रारब्धफलं अप्रारब्धफलञ्चेति। अत्रान्तिम विद्याविनाश्यम्, एवमुत्तरमपि विद्यानुकूलमननुकूलञ्चेति द्विविधम्। अननुकलमपि बुद्धिपूर्वमबुद्धिपूर्वञ्चेति। तत्राबुद्धिपूर्वस्य विद्यामाहात्म्यादश्लेप.। एवं ययोः कर्मणोरयोः प्रबलकर्मान्तरप्रतिरोधाददत्तफलयोरश्लेपविनाशौ भवतः। तयोर्हानं सुहृदाद्युपायनञ्चोच्यते। अश्लेपविनाशौ च कर्मशक्तिप्रतिबन्धतन्नाशावेव। सा च शक्तिः भगवत्प्रीतिकोपविशेषात्मिका। तादृशौ च प्रीतिकोपौ सुहृद्द्विषद्गोचरौ भवत इति तावत्तैवोपायनमुच्यते। अत्राय विशेषः। विद्यानुगुणानामदत्तफलानां

कर्मणां शरीरपातादूर्ध्वं विनाश उपासनञ्च। इतरेषां तु विद्या-
धिगमदशायामेवाश्लेषविनाशौ। उत्क्रमणदशायाञ्च हानमुपायन-
ञ्चेति विभाग इति। न्यासविद्या तु प्रारब्धमपि निश्शेषं विना-
शयितुं शक्ता। तथापि रागविषयमंशं तदनुबन्धिदुःखञ्च स्थाप-
यति। निश्शेषवैराग्ये तु निश्शेषन्निवर्तयति। अत एवार्तदृप्त-
भेदः। रागविषयांश एतद्देहावसानिकः देहान्तरावसानिक इति
दृप्तेन परिच्छेत्तु शक्यम्। विचित्रत्वात्पुंसां अभिप्रायपद्धतेः।
अस्याञ्च विद्यायामन्तिमप्रत्ययापेक्षाऽपि न विद्यते। अत्राचार्याः

श्लो॥ प्रारब्धकर्मावधिको मोक्ष इत्थमुपासितुः।
दृप्तस्य देहावधिक आर्तस्यान्त्यवधिर्मतः॥ इति

उत्क्रमिष्यतस्सर्वस्य पूर्वं वागिन्द्रियं तदनु च शेषाणि नवेन्द्रि-
याणि मनसा सहाविभागं गच्छन्ति। तच्च सर्वेन्द्रियसंयुक्तं
मनः प्राणेन। स चैकादशेन्द्रियसंयुक्तो जीवेनाविभागं गच्छति।
स च जीवात्मा इन्द्रियप्राणसंयुक्तः सूक्ष्मैः पञ्चभूतैरप्यविभागं
गच्छति। तानि पञ्च भूतानि इन्द्रियप्राणजीवसंयुक्तानि परमात्म-
नाविभागं गच्छन्ति। एतावच्च निरूदविदुषोस्साधारणम्। अवि-
दुषस्तु विशेषः प्रागेवोक्तः। विद्वांस्तु सर्वो मूर्धन्यया ब्रह्मना-
ड्या सुखेन शरीरान्निष्क्रामन्नर्चिरहस्सितपक्षोदगमनाब्दमरुदर्के-
न्दुवैद्युतवरुणेन्द्रप्रजापतिसञ्ज्ञैरातिवाहिकैः पुरुषैः क्रमाद्यथा स्व-

सन्देशमतिवाह्यमानो वैद्युतेनामानवनाम्ना तेनव क्रमाद्वरुणादि-समीपं नीत' तेन ब्रह्मसमीपमुपनीयते। उत्क्रम्य गच्छतश्चास्य सर्वकर्मक्षयेऽपि विद्यामाहात्म्यादेव सूक्ष्मशरीरभिलष्य किञ्चि-त्त्रिगुणद्रव्यमुपष्टम्भमनुवर्तते। निश्शेषविद्याविनाशश्च विशिष्ट-देशगतिसापेक्ष इति गतिशास्त्रादेवाध्यवसीयते। यथा च तमेतं वेदानुवचनेनेत्यादिशास्त्रेण विद्योत्पत्तेर्वर्णाश्रमधर्मशौचाचारदेशका-लाद्यपेक्षाऽवगम्यते। तथा निश्शेषाविद्यानिवृत्तिरपि विशिष्टदे-शगतिसापेक्षेति शास्त्रादवगम्यते। उत्क्रमणप्रभृति चोत्तरोत्तर-मतिशयितज्ञानानन्दशाली जायते। प्राणेन्द्रियादिमत्वाच्च मध्ये भोगविहारसवादाद्युपपत्तिः। अमानवकरस्पर्शादारभ्य चासौ मुक्तः। ततः पूत्रस्सर्वोऽप्युपायव्यापारः। फल परमपदपर्यङ्कारो-हण दिकम्। तथा ह्ययमीश्वर इवापहतपाप्मत्वसत्यसङ्कल्पत्वा-दिविशिष्टो भवति। तच्चास्य समस्तप्रतिबन्धकात्यन्तिकलया-दाविर्भूत स्वाभाविक रूपम्। तत. पर कदाचिदप्यस्य न ससारात्मिका पुनरावृत्तिः। तत्र स्वतन्त्रपरमपुरुषसङ्कल्पाद्वा स यदि पितृलोककामो भवति। मातृलोककामो भवतीत्यादिना मातृपितृलोककामनायः श्रुतत्वात् पित्रादिलोककामनायत्तस्वस-ङ्कल्पाद्वा तादृशस्थानस्य स्वर्गादिवन्नश्वरत्वेन वा पुनरावृत्ति-सम्भावना स्यात्। न स्यात्। परमपुरुषस्सत्यसङ्कल्पोऽत्यन्त-प्रियतम ज्ञानिन प्राप्य कदाचिदपि नावर्तयिष्यति।

श्लो॥ 'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः॥'
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।

इत्युप्रकम्य

'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते'

इत्यादिप्रमाणात्। निश्शेषक्षीणकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदन्यात्यन्तहेयपुरुषार्थतत्साधनारम्भादिषु कामनानुदयान्न स्वसङ्कल्पात्पुनरावृत्तिशङ्का। पितृलोककामो भवतीत्यादिकं तु स्वसङ्कल्पभगवत्सङ्कल्पान्यतरसृष्टपरमपुरुष-भोगनिमग्ना प्राकृतपित्रादिभोगरूपत्वेन भोगविभूत्यनुभवविशेष-प्रतिपादकमिति नानुपपत्तिः।

'काल स पचते तत्र न कालस्तत्र वै प्रभुः'

इत्यादिना कालाकाल्यत्वाजरत्वाक्षरत्वादि प्रतिपादनात्। स्थानानित्यत्वप्रयुक्ता न पुनरावृत्तिशङ्का। अतो मुक्तः पुनर्न निवर्तत इति। अथ कोऽसौ मोक्षः? निश्शेषाविद्यानिवृत्तिरूपपरिपूर्णब्रह्मानुभवः। स एव यथाधिकारं भक्तिप्रपत्त्यन्यतरोपायेन साध्यते। स चानुभवस्सर्वविषयकस्सङ्कोचकानां कर्मणा निश्शेषक्षयात्।

'सर्वं ह पश्यः पश्यति निरञ्जनः परमं साम्यमुपैति।
मम साधर्म्यमागता'

इत्यादिप्रमाणैः स चायमनुभवः पुनः कदापि न क्षीयते कारणाभावात्। अतो मुक्त ईश्वरवत् सर्वज्ञः।

नन्वसौ मोक्ष. नित्योवाऽऽगन्तुको वा। नाद्यः। साधनानुष्ठानवैफल्यात्। न द्वितीयः। मोक्षस्य नश्वरत्वप्रसङ्गाज्जातस्य विनाशध्रौव्यादिति चेन्न। पूर्वावधिमतो ध्वंसस्योत्तरावधिराहित्यवदस्याप्युत्तरावधिराहित्यात्। भावान्तराभाववादिनो धीसङ्कोचध्वंसरूपत्वात् परिपूर्णब्रह्मानुभवरूपमोक्षस्येति नानुपपत्तिः। अत्रेदमवधेयम्। धर्मभूतज्ञान तु द्रव्यं नित्यञ्च द्रव्यत्वादेव विकारयोगि। तच्च सर्वविषयकत्वस्वभावमपि कर्मणा प्रतिबद्धं सत् तत्तत्कर्मतारतम्येन विषयप्रकाशनतारतम्यवत्। यथा प्रकाशस्वभावस्यापि प्रभाद्रव्यस्य घटभित्त्याद्यवधारणाधीनप्रकाशप्रतिबन्धस्तदभावे च स्वाभाविकः प्रकाशः। तथा प्रतिबन्धककर्मणां निश्शेषक्षये सति स्वाभाविकसर्वविषयप्रकाशनरूपावस्था जायते। सैव सङ्कुचितावस्थावस्थितस्य ज्ञानस्य स्वपरयाथात्म्यानवगाहिनः अविद्याशब्दवाच्यस्य ध्वंसः। यथा घटत्वावस्थावस्थितस्य मृद्द्रव्यस्य कपालावस्थाप्राप्तिर्ध्वंसः तद्वत् तथा चाविद्यानिवृत्तिरूपपरिपूर्णब्रह्मानुभवस्य जातत्वेऽपि तस्य तद्विरोध्यवस्थायास्तदुत्तरमभावात् तस्य नित्यत्वमिति। आहुश्च महर्षयः —

श्लो॥ 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मन क्रियते तथा।

यथोपपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥' इति

ननु यदि मुक्तस्सर्वज्ञस्स कथं न दुःख्येत्? प्रतिकूलविषयविशेषसन्दर्शनस्यैव दुःखहेतुत्वात्। लोके तथैव दृष्टेः। न चानुकूलमात्रविषया मुक्तधीरिति वाच्यम्। सर्वं ह पश्यः पश्यतीति श्रुतेस्सङ्कोचकाभावात। न च न पश्यो मृत्युं पश्यति न रोगं नो तदुःखतामिति श्रुत्या सङ्कोचस्सोढव्य इति वाच्यम्। सङ्कोचककर्मणां निश्शेषप्रक्षीणत्वात्। न च बद्धदशायां केनचिद्धेतुनाऽनुकूलेषु प्रतिकूलबुद्धिवदिदानीं प्रतिकूलेष्वप्यनुकूलबुद्धिरिति वाच्यम्। तथा सतीदानीमप्युपाध्यनुवृत्त्या कर्मबन्धानुवृत्तिरिति मुक्तेरेवाभावप्रसङ्गात्। तथा च मुक्तबुद्धेस्सङ्कोचासङ्कोचविकल्पासहतया पाषाणकल्पपक्ष एव ज्यायानिति चेन्मैवम्। सर्वस्यापि वस्तुजातस्य वासुदेवविभूतितया स्वतोऽनुकूलत्वात्। वासुदेवस्य च निरुपाधिकस्वामित्वान्निरुपाधिकस्वामिविभूतितया परिदृश्यमानं सर्वं स्वतोऽनुकूलमेव भवेत् न च स्वतोऽनुकूलस्वभावं सर्वं बद्धैरनुकूलतया कथं न गृह्यत इति वाच्यम्। कर्मसवृतधियां तेषां कर्मानुगुण्येनानुकूलप्रतिकूलोदासीनतया भानात्। प्रतिबन्धकनिवृत्तावेव स्वभाविकानु-

कूल्यप्रतीतेः। यथा पित्तोपहतस्य क्षीरादेरभोग्यत्वेऽपि पित्त-शान्तौ तस्यैव भोग्यत्वम्। आहुश्च महर्शयः—

श्लो॥ वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च।
कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः॥ इति।

श्लो॥ तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते।
तदेव कोपाय यतः प्रसादाय च जायते॥ इति च।

अतस्सर्वोपाधिविगमे स्वाभाविकानुकूल्याविष्कार उच्यत इति, स्यादेतत्।

मुक्तानां दुःखासंबंधः—

ननु संसारित्वावस्थासिद्धं नित्यानां प्रातिकूल्यं स्वानुभूतं प्राचीनञ्च दुःखं मूक्तः पश्यति वा न वा? आद्ये श्लो॥ 'गन्धाश्मरजसा स्पृष्टो नष्टो दीपः पुनर्ज्वलेत्' इति न्यायेन पुनरपि दुःखसन्ततिस्स्यात्। उत्तरत्र मुक्ताना धीसङ्कोचप्रसङ्गः। तदा हि दुःखमपि स्यात्। तस्य धीसङ्कोचव्याप्यत्वात्। अतो बद्धावस्थाया कतिपयदुःखानुभवः। मुक्तावस्थायामनन्तदुःखानुभव इत्यायातमिति चेन्न। स्ववृत्तिवर्तमानदुःखसाक्षात्कारस्यैव दुखित्वरूपत्वात स्वीयप्रचीनदुःखानां स्ववृत्तित्वेऽपि वर्तमानत्वाभावात् अन्यदुःखानां वर्तमानत्वेऽपि स्व-

वृत्तित्वाभावाच्च न मुक्तस्य दुःखानुभवः। न हि प्राप्ताभिषेकं राजकुमारं प्राचीनकारागृहवासधीर्दुःखाकरोति।

अत एव (श्लो) 'प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखी बभूवुः' इत्युक्तम्।

निरयाणामपि वासुदेवविभूतित्वेनानुकूलत्वात् कर्मिणां वासुदेवविभूतिभूतानां केषाञ्चित् प्रातिकूल्यं कर्मकृतमेव तन्निवृत्तौ कथं तेषां प्रातिकूल्यम्। एवं तर्हीश्वरस्य सर्वाधारत्वात् स्ववृत्तिवर्तमानदुःखसक्षात्कारवत्वात् तस्य दुखित्वं स्यादिति चेन्न। तस्य जीवद्वारा दुःखाश्रयत्वेऽपि साक्षात्सम्बन्धेन तदनाधारत्वात्। विकारिदुःखित्वादेस्साक्षादाधारत्व एवहि दोषः। अत एव प्रपञ्चान्तर्यामिणस्तद्गतदोषास्पर्श उपपद्यते। न चैव मपीश्वरस्य सर्वशरीरत्वात्सम्बन्धेन स्यादिति वाच्यम्।

'द्वासुपर्णा सुयजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति'

इति श्रुत्या कर्मबन्धस्यैव दुःखहेतुत्वप्रतिपादनेन शरीरसम्बन्धस्यदुःखं प्रत्यप्रयोजकत्वात्। दण्ड्यदण्डकयोरेककारागृहसम्बन्धेऽपि दुःखतदभावयोर्दर्शनात। राजतद्भृत्ययोश्शरीरसम्बन्धसाम्येऽपि दुःखतदभावयोर्दर्शनाच्च। न चैवमपि मनुष्याणां

श्लो॥ 'व्यसनेषु मनुष्याणां भृशं भवतिः' दुःखितः।

इत्यनेन भगवत्साक्षाद्दुःखाधारत्वं प्रतीयत इति वाच्यम्। तस्य दुःखाभिनयमात्रपरत्वात्। अन्यथा दुःखस्यात्यन्तहेयतया तदभ्युपगमे तस्य हेयप्रत्यनीकत्वप्रङ्गप्रसङ्गात्। न च दुःखवत् क्रोधस्यापि हेयतया रावणादिविषये क्रोधदर्शनात्तस्यापि हेयत्वात्तद्दोहतादवस्थ्यमिति वाच्यम्। दुष्टनिग्रहधुरन्धरस्य प्रभोर्निग्रहौपयिकस्य क्रोधविशेषस्य सुगुणत्वात्। तथाहि क्रोधो द्विधः। सुनिरसविषयोऽसुनिरसविषयश्चेति। तत्राद्यो न हेयः। तस्य विषयनिरसनद्वारा सन्तोषजनकत्वात्। लोके हि राजानश्शत्रुषु क्रुद्धास्तान् शत्रून् निरस्य तुष्यन्ति। द्वितीयस्तु हेयः। तस्य शोकजनकत्वात्। शत्रुजयप्रवृत्ता हि राजान अशक्त्या शत्रुजयान्निवृत्ताः खिन्ना भवन्ति। अतस्तस्य हेयत्वान्नेश्वरवृत्तित्वम्। अशक्यविषयकोपस्य शोकहेतुत्वेन हेयत्वम्।

श्लो॥ द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषकौ।
यश्चालभ्य कामयते यश्च कुप्यत्यनीश्वरः॥

इत्यनेनाप्यभिधीयते।

अथैवं रीत्या दुःखित्वमपि द्विविधम्। परदुःखदुःखित्वं दुःखित्वञ्चेति। तत्राद्यस्य दयारूपतयाऽहेयत्वात्तस्येश्वरवृत्तित्वे बाधकाभावेन व्यसनेष्वित्यादेर्मुख्यार्थस्वीकार उचित इति चेन्न। परदुःखापचिकीर्षैव दया। न तु परदुःखदुःखित्वम्। तस्य हेयगुणत्वात्। अतस्सर्वशक्तस्य परदुःखदुःखित्वाभ्युपगम अनु-

चित्त एव। परदुःखप्रतीकारेऽशक्त एव हि स्वयमपि दुःखितो भवति। न तु शक्तः। तथा च दुःखस्य सर्वात्मना हेयत्वात् । भृशं भवतीत्यस्य दुःखाभिनयपरत्वमेवार्थायितुं युक्तम् सर्व-शक्तस्य तथाभिनयोऽप्यासुरोपप्लवलीलायै युज्यत इत्यलं प्रस-क्तानुप्रसक्त्या। आहुश्चाचार्याः :-

श्लो।। यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थं
या दुःखापाचिकीर्षा परहितमनसस्सैव भक्तानुकम्पा'
रोषोऽपि प्रीतये स्यात्सुनिरसिरसविषयस्तस्य निस्सीमशक्तेः'
इति।

अतस्साक्षात्सम्बन्धेन स्वगतवर्तमानदुःखादिदर्शनस्यैव दुःखानुभ-वरूपत्वान्न मुक्तानान्दुःखानुभवगन्ध इति। स्यादेतत् ।

आनंदतारतम्यनिरासः

ननु मुक्तानामानन्दे तारतम्यं वक्तव्यम्। तद्धि साध-नतारतम्यायत्तं मुक्तिसाधनं हि ज्ञानम्। तत्तारतम्यञ्च लोकत एवावगम्यते। मनुष्यापेक्षया देवानामृषीणाञ्च बहुतरतपश्चर्या-तिशयितशक्तिमत्त्वञ्च पूराणादिषु प्रसिद्धम्। प्रयत्नाधिक्यञ्च फलाधिक्यगमकम्। अन्यथा प्रयत्नानर्थक्यप्रसङ्गः। साधनानु-ष्ठानवैषम्ये सत्यपि तुल्यफलदाने ईश्वरस्य वैषम्यप्रसङ्गश्च।

तथा सैषानन्दस्य मीमांसा भवतीत्यारभ्य मनुष्यादिचतुर्मुख-पर्यन्तानां मुक्तानामानन्दतारतम्य प्रतिपाद्य श्रोत्रियस्य चाका-महतस्येति तत्तन्मुक्तेष्वपि तत्तदानन्दतारतम्यमतिदिश्यते। अत-स्तत्तन्मुक्तानामानन्दतारतम्य सिद्धम्। परमसाम्यश्रुतिश्चास-ङ्कुचितार्था न त्वयापि व्यवस्थापयितु शक्यते। जगत्कारण त्वलक्ष्मीपतित्वादेर्मुक्तेष्वसम्भवात्। शेषत्वशेषित्वाणुत्वमहत्त्वा-दिप्रयुक्ततारतम्यस्य दुरपह्नवत्वाच्च। अतो निर्दोषत्वमात्रेणै-वेश्वरसाम्यपरा परमसाम्यश्रुतिः।

ततश्च मुक्तानां यथा साधनानुष्ठानमानन्द तारतम्य-सिद्धिरिति चेदुच्यते। अस्तु साधनतारतम्यम् न तत्स्वाभा-विकम्। अपि तु कर्मकृतमिति।

श्लो॥ 'अविद्या कर्म सञ्ज्ञान्या तृतीया शक्तिरिष्यत' इति। कर्मस्वरूपमभिधाय

'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।
सर्वभूतेषु भूपाल तारतम्ये न वर्तते॥' इति

महर्षिवचनादवगम्यते। मुक्तौ च निश्शेषकर्मक्षयेण कुतस्त-त्प्रयुक्तं ज्ञानतारतम्यम्? अस्तु विज्ञाने तारतम्यम्। तथापि तत्प्रयुक्त न साध्यतारतम्यम्। स्नान सप्तविधं प्रोक्तमित्यु-क्तवारुणाग्नेयादिस्नानतारतम्येऽपि तत्साध्यशुचित्वे तारतम्या-

दर्शनात्। शक्ताशक्तविभागेन प्रायश्चित्ततारतम्येऽपि दुरितनिवृत्तितारतम्यादर्शनात्। बुद्धिमबुद्धिमत्क्रीतसुवर्णक्रयतारतम्येऽपि क्रीततारतम्यादर्शनाच्च। उषरानूषरक्षेत्रनिक्षिप्तबीजतारतम्याभावेपि तत्साध्यफलतारतम्यदर्शनाच्च। मन्दामन्दपुरुषकर्तृकश्रवणतारतम्याभावेपि तत्साध्यज्ञानतारतम्यदर्शनाच्च। स्वर्गापवर्गकामपुरुषानुष्ठित ज्योतिष्ठोमावैषम्येऽपि तत्साध्यफलतारतम्यदर्शनाच्च। हिताहितपुरुषकृतसेवासाम्येपि तत्फलराजानुग्रहतारतम्यदर्शनाच्च तार्णातार्णरूपसामग्रीवैषतज्जन्यवह्निवैरूप्याभावाच्चान्वयव्यतिरेकाभ्या व्यभिचारात्। न च प्रयत्नानर्थक्यम्। उपासनकालीनानन्दविशेषसम्पादनेन तत्सार्थक्यात्। अत एव न वैषम्यमीश्वरस्य। अतो न साधनतारतम्यमानन्दतारतम्ये प्रमाणम्।

अप्रामाणिकश्चायमानन्दतारतम्यवादः। तथाहि। न तावत् प्रत्यक्ष प्रमाणम्। तस्य वैपयिकानान्दविषयत्वात्। अत एव नानुमानम्। तस्य प्रत्यक्षावगतव्याप्तिग्रहणमूलकत्वात्। अप्रयोजकत्वाच्च। नापि श्रुतिः। आदर्शनात्। परमसाम्यश्रुतिविरोधाच्च। न चासौ निर्देपत्वेन साम्यपरा। सङ्कोचे मानाभावात्। पारम्यविशेपणस्वारस्यभङ्गाच्च। तथा 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमित्यत्र विधूयेति त्वाप्रत्ययेन निर्देपत्वस्य साम्ये हेतुत्वप्रतिपादनेन,

'सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता, रस ह्येवायं लब्धानन्दी भवति, एष ह्येवानन्द याति, ब्रह्मणो महिमानमाप्नोतीति'

श्रुतिभिः 'भोगमात्रसाम्यलिङ्गाच्चेति' सूत्रेण चावगतस्य भोगसाम्यस्यैव तत्साध्यत्वेन वक्तव्यत्वात्। अत एव' 'ब्रह्म वेद ब्रह्मैव भवतीति 'व्यपदेश उपपद्यत। यथा राज्ञा समानभोगेऽधिकारिणि राजैवायमित्युच्यते। न च किञ्चित्साम्ये। एतेन 'सैषानन्दस्य मीमांसा भवतीत्यादिना मुक्तानामानन्दतारतम्यप्रत्याशाऽपि प्रत्युक्त। परमसाम्यश्रुतिविरोधात्। यथोदके शुद्धे शुद्धमासक्तं तादृगेव भवतीति दृष्टान्तेन शुद्धोदकस्यासक्तस्य रूपरसादिसाम्यवदत्रापि निर्दोषयोर्मुक्तब्रह्मणोरानन्दसाम्यस्यैव वक्तव्यत्वाच्च। आनन्दमीमांसायामपि मुक्तानन्दतारतम्यानुक्तेश्च। तत्र हि मनुष्यगन्धर्वानारभ्य ब्रह्मयज्ञपर्यन्तानाममुक्तानामेवोत्तरोत्तरमानन्दे शतगुणितत्वं प्रतिपाद्यते। न तु मुक्तेभ्यो मुक्तानाम्। किञ्च सैषानन्दस्य मीमांसा भवतीति वाक्यमानन्दगयत्वेनावगतब्रह्मानन्दप्राचुर्यस्यापरिच्छिन्नत्वप्रतिपादनाय प्रवृत्तमिति सैषेति निर्दिष्टप्रतिनिर्देशकतच्छब्दसमभिव्याहारादवगम्यते। 'यतो वाचो निवर्तन्ते' इति श्लोके 'आनन्दं ब्रह्मणो विद्वानिति' ब्रह्मानन्दोपसंहारस्तदेवावगमति। तत्र कथं मुक्तानन्दतारतम्येऽपि तात्पर्य कल्प्यते। तथा सति तात्पर्यभेदा

द्वाक्यभेदापत्तेः । तर्हि प्रतिपर्यायं श्रोत्रियस्येत्यभिधानं किमर्थमिति चेदुच्यते । उपक्रमे तावत्सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति मुक्तस्य ब्रह्मणा समं सर्वकामावाप्त्या प्रचुरानन्दयोगस्य सङ्ग्रहेणोक्तस्य तद्विवरणतया सैषानन्दस्येत्यादेः प्रवृत्तत्वात् । तत्र श्रोत्रियस्येत्यनभिधाने मनुष्यगन्धर्वादीनाममुक्तानामिव तन्मुक्तानामपि तेनैव पदेन सङ्ग्रहप्रसङ्गेन तदानन्दस्याप्यन्योन्यमपकर्षप्रसङ्गेनाभिमतब्रह्मानन्दसाम्यन्न सिध्येत् । तदभिधाने तु सर्वानन्दानां ब्रह्मानन्द इव मुक्तानन्देऽप्यन्तर्भावसिद्धौ तदपकर्षो न सिद्ध्येत् । अतोऽवश्य तद्वक्तव्यम् । सर्वत्र श्रोत्रियस्येति पदमेकं मुक्तपरमेव । तथा च 'स एको ब्रह्मण आनन्द' इत्यनेन मनुष्यगन्धर्वानन्दप्रभृति चतुर्मुखानन्दपर्यन्तानामुत्तरोत्तरशतगुणितानामानन्दानां शते पञ्चाशन्न्यायेन ब्रह्मानन्दान्तर्भावेन ब्रह्मानन्दस्यापरिच्छिन्नत्वप्रतिपादनवत् श्रोत्रियस्य चाकामहतस्येत्यनेन मुक्तानन्देऽपि तेषामन्तर्भावप्रतिपादनात् ब्रह्मतुल्यानन्दयोगित्वं चेत्येकत्र मुक्तस्यापीत्यभिमतसिद्धेः ।

नन्वेवमपि स एको ब्रह्मण आनन्द इति ब्रह्मानन्दे परिच्छेदराहित्य प्रतिपाद्य श्रोत्रियस्येति मुक्तानन्देति देशेन मुक्तस्य ब्रह्मतुल्यानन्दसिद्धौ प्रतिपर्यायं श्रोत्रियस्येति दत्तदानन्दातिदेशः किमर्थं क्रियत इति चेन्मैवम् । 'रसो वै सः ।

रसं ह्येवायं लब्ध्वानन्दी भवति। एष ह्येवानन्द याति। 'यतो वाचो निवर्तन्ते।' 'आनन्द ब्रह्मणो विद्वानित्यादिभिर्ब्रह्मणो निरतिशयानन्दत्वसम्पतिपत्त्या अमुक्तदेवमनुष्यादिजीवानन्दानां तारतम्यदर्शनेन तद्वन्मुक्तदेवमनुष्याद्यानन्दानामपि तारतम्यं पश्यता केषाञ्चिन्मन्दानां सम्प्रतिपत्त्यर्थं मनुष्यगन्धर्वप्रभृत्यानन्दानामपि शते पञ्चाशन्न्यायेन मुक्तानन्देऽन्तर्भावप्रतिपादनाय प्रतिपर्यायं श्रोत्रियस्य चेत्युक्तम्। अतस्सैषाऽनन्दस्येत्यनेन मुक्तस्य ब्रह्मानन्दतुल्यानन्दवत्त्व प्रतिपाद्यत इति न मुक्तानन्दतारतम्यसिद्धिः। न चैवमपि 'मुक्तस्य जगद्व्यापारवर्जमित्यनेन जगत्सृष्ट्यादिलीलासम्भवेन तत्प्रयुक्तानन्दाभावेन न ब्रह्मतुल्यानन्दसिद्धिरिति वाच्यम्। जगद्व्यापाराभावेऽपि तद्व्यापाराधीनानन्दानां मुक्तेष्वपि पित्रादिव्यापाराधीनफलभोगजनितानन्दानां तद्व्यापारशून्यपुत्रादिष्विव सम्भवात्। मुक्तानामीश्वरेण भोगसाम्यं 'भोगमात्रसाम्यलिङ्गाच्चेति' सूत्रेण प्रतिपादितम्। अतो मुक्ता ईश्वरेण समानभोगा इति सिद्धम्।

हरि ओम् शुभमस्तु

* * *

श्रीः

# अथ कैवल्यवादः

ननु स्वात्मानन्दानुसन्धानमात्ररूपकैवल्याख्योऽपि मोक्षो भगवद्यामुनमुनिभिरुक्तः ।

श्लो॥ 'ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम् ।
वेद्योपादेयभावानामष्टमे भेद उच्यते ॥
संसृत्यक्षरवैष्णवाध्वसु नृणां' इति

अनुसृतश्चायं मोक्षो भाष्यकारैरापि। तथाहि–

श्लो॥ 'चतुर्विधा भजन्ते मां ये जनाः'

इत्यादौ जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपा वाप्तीच्छुरित्युक्तम्। तथा चाष्टमाध्याये 'ओमित्येकाक्षर ब्रह्म व्याहरन माम-नुस्मरन्' मद्वाचक व्याहरन् वाच्यं मामनुस्मरन् आत्मनः प्राणं मूर्धन्याधाय देहं त्यजन् य प्रयाति स याति परमा गतिम्। प्रकृतिवियुक्त मत्समानाकारमपुनरावृत्तिमात्मानं प्राप्नोतीत्यर्थ इति चोक्तम्। अतः परमध्यायशेषेण ज्ञानिनः कैवल्यार्थिन-श्चापुनरावृत्तिमैश्वर्यार्थिन. पुनरावृत्तिश्चाहेत्युक्त्वा मामुपेत्येत्या दिक प्रभवत्यहरागम इत्यन्त व्याख्याय कैवल्यं प्राप्तानामपि पुनरावृत्तिर्न विद्यत इत्याहेत्युक्त्वा 'परस्तस्मात् इत्यादिकमपि'

तद्धाम परमं मम 'इत्येतदन्तं व्याख्यातम्। अनन्तरश्चात्मयाथात्म्यविदः परमपुरुषनिष्ठस्य साधारिणी गतिमाहेत्युक्तम्। अथ तदुत्तरं द्वयोरप्यर्चिरादिका गतिः श्रुतौ श्रुता। सा चापुनरावृत्तिलक्षणा। यथा च पञ्चाग्निविद्यायामित्युपक्रम्य महता ग्रन्थेनाक्षरनिष्ठस्याप्यर्चिरादिका गतिरुक्ता। द्वादशाध्याये च 'ये त्वमक्षरम्' इत्यत्र तेऽपि मां प्राप्नुवन्ति। ध्रुवं मत्समानाकारमसंसारिणमात्मानं प्राप्नुवन्त्येवेत्यर्थं इत्युक्तम्। अतस्साम्प्रदयिक एवायं कैवल्याख्यो मोक्ष इति केचित्।

अत्रोच्यते न तावदयं मोक्षो भाष्यकाराभिमतः। शारीरकभाष्ये व्यक्तमुक्तत्वात्। तथा हि वाक्यान्वयाधिकरणे तावदमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनादित्युक्त्वा परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनस्स्वरूपयाथात्म्यवेदनमपवर्गसाधनभूतपरमपुरुषवेदनोपयोगितयाऽऽवश्यकम्। न स्वत एवोपायत्वेनेत्युक्तम्। तथा येयं प्रेते विचिकित्सा मनुष्य इति व्याख्याने तत्तद्वाद्यभिमतमोक्षविकल्पानुपन्यस्य त्रैय्यन्तनिष्णात तु इत्यादिना जीवपरयोः स्वरूपस्वभावानप्यभिधाय जीवस्यानादिकर्मरूपाविद्यानिरोहितस्याविद्योच्छदपूर्वकं स्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षत इत्युक्तम्। सर्वकर्मविनिर्मुक्तात्मस्वरूपावाप्तिर्हि भगवत्प्राप्तिगर्भा इति च।

एवं वरदविष्णुमिश्रैरपि—नन्वेवं निश्शेषकर्मक्षयाभावात् कैवल्यप्राप्तौ न मुक्तस्स्यादित्याशङ्क्य सत्यममुक्त एव सः मोक्षस्य परमात्मानन्दानुभवरूपत्वात्, तस्य ब्रह्मानन्दानुभवाभावात्। स्वानन्दमात्रानुभवात्। स्वानन्दमात्रानुभवश्च

श्लो॥ 'योगिनाममृत स्थानं स्वात्मसन्तोषिणश्च ये' इति

भगवत्पराशरवचनात्। मुक्तिव्यतिरिक्तगनपायि योगसाध्यमैश्वर्यमिति भट्टपराशरपादैरध्यात्मखण्डद्वयव्याख्यायामैश्वर्याक्षरयोरपवर्गव्यतिरिक्ततया तुल्यत्वं दर्शितम्। यदि वाऽसौ मोक्षः। तदा स्वाभाविकरूपप्राप्तिमन्तरेण न पर्यवसानम्। यदि पर्यवसानं तदा नित्यससारिविशेष एवायमिति मन्तव्यम्।

उक्तञ्च सङ्गतिमालायां श्रीविष्णुचित्तैः— ननु ब्रह्मप्राप्तीच्छयोपक्रान्तस्योपासनस्य कथं कैवल्यप्रापकत्वम्? उच्यते यथा स्वर्गकामस्येव यागे प्रक्रान्तस्यायथावदनुष्ठाने ब्रह्मराक्षसत्वादिर्भवतोति।

ननु कस्यैव विधे स्वाभाविक भगवदनुभवयोग्यतागन्धविधुरतया दग्धबोजपर्याये स्वात्मन्यभिलाषा स्यादिति चेन्नन्त नैवं विधेऽपि स्वर्गगणुपुनभिक्षोदनादिष्वभिलाषिणो दृश्यन्ते। कि 'पुनरतिशयानन्दशालिन्येवंविधे। प्रसिद्धञ्च प्रियास्पदत्वं स्वात्मनः। आगमश्च श्लो॥ 'आश्चर्यवत्पश्यति कश्चिदेनमिति

कथं तत्र मोक्षव्यपदेश इति चेत् दुःखहेतुभूतदेहेन्द्रियात्यन्तलयात्। केन मार्गेण गच्छति कुत्र तिष्ठतीति चेत् येन केनापि मार्गेण यत्र कुत्रापि। न तावदर्चिरादिगतिः। प्रकृतः परस्ताद्वासश्च न युज्यते। परमात्मोपासनप्रकरणेष्वेव तयोः श्रवणात्। तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते इति विभागस्यापि परमात्मात्मकस्वात्मानुसन्धानस्वात्मशरीरक परमात्मानुसन्धानभेदमूलत्वात्। यदि चास्यार्चिरादिमार्गेण गतिस्स्यात् तदा विशिष्टदेशप्राप्त्या निश्शेषाविद्यानिवृत्तिः ब्रह्मप्राप्तिश्च स्यादेव। स एतान् ब्रह्म गमयतीति श्रवणात्। एवञ्च ज्ञानसङ्कोचहेतुभूताविद्यात्यन्तविलयात्सर्वज्ञत्वादिप्रसङ्गो दुष्परिहारः। भगवद्रामानुजमुनिभिरपि संसृत्यक्षरवैष्णवाध्वस्विति वैष्णवाध्वा पृथगुपदिष्टः। श्रुतोपनिषत्केति सूत्रभाष्ये चाधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमानाऽर्चिरादिका गतिः या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुष श्रुतवत इत्यादि। अतोऽपि केवलात्मानुसन्धायिनोऽर्चिरादिगतिर्नास्ति। अन्यथा तया परमात्मनिर्णयायोगात्। एतत्सर्वमप्रतीकालम्बनान्नयतीति सूत्रे व्यक्तमुक्तम्। भाष्ये पञ्चाग्निविद्यानिष्ठस्यापि प्रकृतिविनिर्मुक्तात्मस्वरूपात्मकस्वात्मानुसन्धायित्वं तत्क्रतुन्यायादिना निर्णीतम्। भूमविद्यानिरतप्राणशब्दवाच्यकेवलजीवोपासकस्य चार्चिरादिगतिः कण्ठोक्तस्याप्रतिषिद्धा। एतदधिकरणोपसंहारे च तस्मादचिन्मिश्रं केवलं वा चि–

द्वस्तु ब्रह्मदृष्टया तद्वियोगेन च य उपासते न तान्नियति। अपि तु परं ब्रह्मोपासीनानात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गुणो नयतीति सिद्धमिति। एवं सारे दीपे चोक्तम्। एवं स्थिते श्रीमद्गीताभाष्यवाक्यान्यपि तदनुरोधेन वर्णनीयानि। तत्प्रकारस्तु श्रीमत्तात्पर्यचन्द्रिकायां विशदमनुसन्धेयः। अत्रापि तत्प्रकारविशेषः किञ्चिदुच्यते। यस्त्वात्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीमर्चिरादिकां गतिमाहेत्यादिग्रन्थस्तु कैवल्यनिष्ठपरमपुरुषनिष्ठयोर्विषय इति न मन्तव्यम्। किन्तु परमात्मशरीरस्वात्मानुसन्धातृस्वात्मशरीरकपरमात्मानुसन्धातृभेदभिन्नब्रह्मनिष्ठविषय एव। तथा सत्यात्मयाथात्म्यविच्छब्दोऽप्यत्यन्तानुगुणः। एकग्रन्थशकलास्वारस्यं बहुग्रन्थस्वारस्याय ग्राह्यम्। न चात्र कश्चित् भगवद्यामुनमुनिवचनविरोधगन्धोऽपि। श्रीमद्गीताभाष्येऽपि पञ्चाग्निविद्यानिष्ठस्य ब्रह्मात्मकस्वात्मानुसन्धान तत्क्रतुन्यायात् ब्रह्मप्राप्तिश्च स्फुटतरं प्रत्यपादि। अत. केवलात्मानुभवितुर्नार्चिरादिनागमनपुनरावृत्तिश्च। किन्तु पञ्चाग्निविद्योक्तजीवात्मशरीरकपरमात्मोपासितुः परमात्मशरीरकजीवात्मोपासितुश्चार्चिरादिगमनमपुनरावृत्तिश्चेति। आहुश्चाचार्या —

श्लो॥ 'सर्वकर्मविनिर्मोके मुक्तिभेदः कथ भवेत्?
कर्मैकदशयोगे तु न मुक्तिर्भुक्तिभेदवत्

न च कैवल्यवचसा मुक्तिरेपेति युज्यते
स्वमात्रभुक्तितात्पर्यात्तस्य तत्र प्रयोगतः॥ इति। एवं

'विश्वान्तर्यामितत्त्वं स्वयमिह चिदचिद्विग्रहैर्वा विशिष्टं
यस्यामालम्बनं सा भवभयशमनी वीतरागस्य विद्या।
यस्तूपास्ते यथोक्त तदितरदतथा ब्रह्मदृष्टया स्वतो वा
नैतस्य ब्रह्मनाड्योद्गतिरपि न पदव्यर्चिरादिर्न मोक्षः॥
इति च॥

चतुर्विधा मम जना भक्ता एव हि ते श्रुताः।
तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः॥
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम्।
ये तु शिष्टास्त्रयो भक्ता फलकामा हि ते मताः॥
'सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्।'

इति प्रमाणान्यनुसन्धेयानि। किं बहुना? केवलात्मन ब्रह्मात्मकत्वेनोपासने तस्य तद्विशिष्टब्रह्मोपासनत्वात् यथाक्रतुन्यायात् ब्रह्मप्राप्तिरवर्जनीयेति। न तस्य कैवल्यमात्रानुभवः। किन्तु कैवल्यानुभवपूर्वकब्रह्मानुभवः। स तु नित्यः। अनुभविताऽर्चिरादिकया गत्या गच्छति। गत्वा च न पुनर्निवर्तते। केवलात्मानुभवकामस्तु प्रकृतिविनिर्मुक्तमात्मानं स्वातन्त्र्येणोपास्त इति वक्तव्यम्। तथैव यथाक्रतुन्यायात्

केवलात्मानुभव एव फलं भवति। तथा च तस्य प्रतीकोपासनत्वात् तत्फलमनित्यम्। तदुपासकश्च नार्चिरादिमार्गेण गच्छति पुनर्निवर्तते च। सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागित्युक्तेः। एतत्सर्वमभिप्रेत्य श्रीवत्साङ्कमिश्राः —

श्लो।। 'भोगा इमे विधिशिवादिपदञ्च किञ्च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता।
सर्वन्तदूषजलजोपमहं जुषेय हस्त्यद्रिनाथ तव दास्यमहारसज्ञ.।।'

इत्यनुजग्रुहु। अतः केवलात्मानुभवः प्राजापत्यैश्वर्याद्यनुभववन्नश्वर। तत्स्थानमपि प्रकृतिमण्डल एव यत्र कुत्रचिन्मार्गश्च देवयानाद्यन्य इति सिद्धम्। अधिकमस्मत्पितामहपाद श्रीकृष्णसूरिकृतसारसञ्जीविनीग्रन्थेऽनुसन्धेयम्।।

इति श्रीरामानुजसिद्धान्तसङ्ग्रहे जीवपरिच्छेदस्समाप्तः।

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः।

हरिः ओम् शुभमस्तु

* * *

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

# अथेश्वरपरिच्छेदः

अथेश्वरश्चिन्त्यते। सर्वेश्वरत्व सर्वव्यापकत्वे सति चेतनत्वम्। सर्वशेषित्व सर्वकर्मसमाराध्यत्वम्। स्वज्ञान-स्वेतरसर्वद्रव्यशरीरकत्वम्। स्वतस्सत्यसङ्कल्पत्वादिकं तल्लक्षणम्। एवं जन्मादिसूत्रे जगज्जन्मस्थितिलयकारणत्वं ब्रह्मलक्षणमुक्तम्। तत्र जन्मकारणत्वादेः प्रत्येकलक्षणत्वपक्षे एकैकस्य लक्षणत्वेऽपि बुद्धिवैशद्यार्थं लक्षणत्रयमिति बोध्यम्। सम्भूय लक्षणत्वपक्षे जन्मकारणश्चतुर्मुखः। स्थितिकारणं विष्णुः। लयकारणं रुद्र इति कुमतिशङ्काव्यावर्तनं प्रयोजनमिति बोध्यम्। एव सत्यादिवाक्येऽप्यनन्तपदेनैव सर्वव्यावृत्तिसिद्धौ ब्रह्मणो विकारित्वव्यावर्तनाय सत्यपद जडत्वव्यावर्तनाय ज्ञानपदमिति शङ्कितक्रमेण व्यवच्छेदलाभः प्रयोजनं भाव्यम्। अनन्तपदेन सर्वव्यावृत्तिः कथमिति चेदित्थम्। अनन्तपदमसङ्कोचोद्देशतः कालतो वस्तुतश्च परिच्छेदरहितमाह। तत्र देशतः परिच्छेदस्तु देशविशेषनिष्ठाभावप्रतियोगित्वम्। तच्चात्र घटोऽस्ति अत्र नास्तीति प्रतीत्यादेशविशेषमात्रवृत्तिघटादिषु वर्तते। ब्रह्मणि तन्नास्ति तस्य सर्वदेशवृत्तित्वात्। अतो देशतः परिच्छिन्न-

व्यावृत्तं ब्रह्म। कालतः परिच्छेदोऽपि कालविशेषनिष्ठाभाव-प्रतियोगित्वम्। तच्चास्मिन् कालेऽस्ति न कालान्तर इति प्रतीत्या कालविशेषमात्रवृत्तिष्वेव वर्तते। न त्रैकालिकब्रह्म-णीति कालपरिच्छिन्नव्यावृत्तं ब्रह्म। वस्तुतः परिच्छेदस्तु एक-वस्त्वनुयोगिकवस्त्वन्तरप्रतियोगिकभेदः। स च घटः पटो नेत्या-दिप्रतीत्या वस्त्वन्तरानात्मकघटादिवस्तुष्वेव। न तु ब्रह्मणि। ब्रह्मणस्सर्ववस्त्वात्मकत्वात्। ब्रह्मणि तादृशनिषेधासम्भवात्। अतो वस्तुपरिच्छेदरहितं ब्रह्म। यद्वा सर्ववस्तुसामानाधिकर-ण्यार्हत्वं वस्तुपरिच्छेदराहित्यम। तच्च ब्रह्मण्येव 'सर्वं खल्विदं ब्रह्म।' 'स ब्रह्मा स शिवस्सेन्द्रस्सोक्षरः परमः स्वराट्।' 'ज्यो-तींषि विष्णुर्भुवनानि विष्णुरिति सामान्यतो विशेषतश्च ब्रह्म-णस्सर्ववस्तुसामानाधिकरण्यदर्शनात्। अतोऽनन्तपदेनैव सर्वव्या-वृत्तिसिद्धिः। 'एकमेवाद्वितीय' 'एको ह वै नारायण आसीदि-त्यादिश्रवणादसावेकः। निस्समाभ्यधिकश्च न तत्समश्चाभ्यधि-कश्च दृश्यत इति प्रमाणात्। स एव ब्रह्मशब्दवाच्यः। तस्यैव त्रिविधपरिच्छेदरहितस्य सर्वात्मकत्वेन निरतिशयबृहत्वबृंहणत्व-श्रवणात्। निरतिशयबृहत्वबृंहणत्वयोरेव ब्रह्मशब्दरूढ्यर्थतावच्छे-दकत्वात्। अत्रेद बोध्यम्। ब्रह्मशब्दो योगरूढः। स च बृह बृहि वृद्धाविति धातोः बृहेरच्चोपधायाः इत्यौणादिकसूत्रेण कर्तरि मनिन् प्रत्ययेन निष्पन्नः। तेन योगशक्त्या बृहद्वाचकः। तथा च बृहत्ववत्सु घटादिषु बृहच्छब्दवत् ब्रह्मशब्दः प्रयुज्यते।

तथा प्रयोगनिवृत्त्यै रूढिरपि स्वीक्रियते। तन्निमित्तञ्च निरतिशयत्वविशेषितम् बृहत्वं बृंहणत्वञ्च। घटादिषु तादृशरूढ्यर्थाभावान्न प्रयोगः। न च योगार्थसत्त्वाद्घटादिषु ब्रह्मशब्दप्रयोगस्स्यादिति वाच्यम्। योगरूढस्य रूढ्यर्थापरित्यागेनैव योगार्थस्य प्रयोगनियमदर्शनात्। अत एव पङ्कजपदस्य पङ्कजनिकर्तृत्वरूपयोगार्थमात्रेण कुमुदादौ न प्रयोगः। प्रकृत्यादिषु ब्रह्मशब्दप्रयोगस्तु बृहत्वगुणलेशयोगादौपचारिकः। न च प्रकृत्यादिषु परमपुरुषे च वैदिकप्रयोगतौल्यात् प्रकृत्यादौ गौणत्वं ब्रह्मणि मुख्यत्वमित्यत्र किं विनिगमकमिति वाच्यम्। बृहति बृंहयति तस्मादुच्यते परब्रह्म।

श्लो॥ 'बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते।
वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि॥
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥'

इत्यादिप्रमाणानामेव विनिगमकत्वात्। ब्रह्मपरिबृढं सर्वत इति यास्कोक्तेः। देवताकाण्डान्ते 'स विष्णुराह हि तं ब्रह्मेत्याचक्षत' इति विष्णौ ब्रह्मशब्दः योगाच्च। परमपुरुषे मुख्यत्वनियामकभूयस्त्वात्। अत एव सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्द इत्युपक्रम्य अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिक इत्यभाष्यतेत्यधिकमस्मत्तातपादश्रीकृष्णसूरिकृतब्रह्मशब्दार्थनिरुक्तावनुसन्धेयम्। स एव सदसदव्याकृत-

ब्रह्मात्माकाशप्राणशिवनारायणादिशब्दैः कारणवाक्यगतैस्सामान्यतो विशेषतश्च व्यपदिश्यते। न वृश्चिकोत्पत्तौ क्वचिद्गोमयस्य क्वचिद्वृश्चिकस्य यथाहेतुत्वम्। तथा जगदुत्पत्तिः क्वचिद्ब्रह्मणः क्वचित्प्रकृत्यादेरिति कारणानियमस्स्यादिति वाच्यम्। तथा भेदकप्रमाणान्तरासिद्धेः। 'एकमेवाद्वितीयमित्यादिशास्त्रेण कारणैक्यसिद्धौ भेदकल्पनायोगात्। अतो न प्रधानादेःकारणत्वम्। नापि चतुर्मुखरुद्रादेः। तेषां सृज्यत्वसंहार्यत्वकर्मवश्यत्वादिश्रवणेन जीवत्वसिद्धे । 'स प्रजापतिरेकः पुष्करपर्णे समभवत्।' 'यो ब्रह्माण विदधातिपूर्वम्। 'त्र्यक्षश्शूलपाणिः पुरुषोऽजायत।' 'ललाटात् क्रोधजो रुद्रोऽजायत।' 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः।

श्लो॥ आभूतसम्प्लवे प्राप्ते प्रलीने प्रकृतौ महान्।
एकस्तिष्ठति विश्वात्मा स तु नारायणस्स्मृत ॥
ब्रह्मणा सह ते सर्वे सम्प्राप्ताः प्रतिसञ्चरे।
क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्॥
आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान्।
ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे॥

श्लो॥ आब्रह्मस्तम्भपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितससारवशवर्तिनः॥

युगकोटिसहस्रेण विष्णुमाराध्य पद्मभू. ।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥
इत्यादिप्रमाणान्यनुसन्धेयानि अतो न चतुर्मुखादेः ब्रह्मत्वम् ।

ननु ब्रह्मविष्णुरुद्रास्ते सर्वे सम्प्रसूयन्त इत्यथर्वशिखायां भगवतोऽप्युत्पत्ति. श्रूयते। एवमवतारेषु शास्त्रानुष्ठानतत्फलभोगादिश्च श्रूयत इति भगवतोऽपि ब्रह्मत्वन्नास्तीति चेन्न। तत्र कर्तृकर्मकृतोत्पत्त्यभावात् । 'अजायमानो वहुधा विजायते।'

श्लो॥ 'न मे पार्थाऽस्ति कर्तव्यं त्रिपु लोकेषु किञ्चन नानवाप्तमवाप्तव्यम् ।
इच्छागृहीताभिमतोरुदेहः ।'
न भूतसङ्घसंस्थान. देहोऽस्य परमात्मनः ।'
'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

इत्यादिप्रमाणैर्लीलाजगद्रक्षणाभ्यामेव तथोक्तः । अत एवापहतपाप्मा दिव्यो देव एको नारायण.' इत्युच्यते।

ननु हिरण्यगर्भस्समवर्तताग्रे भूतस्य जात. पतिरेक आसीत्। आकाशो ह वै नामरूपयोर्निर्वहिता सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। शम्भुराकाशमध्ये ध्येय' इत्यादिकारणवाक्येषुपासनावाक्येषु च वेदान्तस्यापि जगत्कारणत्वमुमुक्षू-

पास्यत्वप्रतिपादनान्नारायणस्यैव ब्रह्मत्वं कथं स्यादिति चेदुच्यते। कारणवाक्यगतानामुपासनवाक्यगतानां हिरण्यगर्भाकाशशम्भ्वादिशब्दानां नारायणपरत्वात्। हिरण्मयस्य परमव्योम्ना गर्भभूतस्तत्र स्थितः परमपदनिलयस्सन् सृष्टेः प्राक् समवर्तत इत्यर्थः। तथा शम्भुशब्दोऽपि शं सुखं भवतीति शम्भुः। सुखरूपो भवति। यद्वा शं सुखं भावयतीत्यन्तर्भावितण्यर्थोऽयं सर्वेषां सुखजनक इत्यर्थः। एवमाकाशशब्दोऽप्यासमन्तात् काशत इति व्युत्पत्त्या परमात्मपरः। अतस्तेषा योगार्थपौष्कल्यात् भगवत्परत्वान्नोक्तदोषः।

नन्वेवमपि प्रतर्दनविद्यायां प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृत मामुपास्व त्रिशीर्षाणं त्वाष्ट्रमहनमितीन्द्रस्यैवोपास्यत्वकथनादिन्द्र एव कारणं न ब्रह्म। न चात्रेन्द्रशब्दः अवयवशक्त्या परमात्मपरः। त्रिशीर्षाणमिति विशेषणानन्वयप्रसङ्गादिति चेन्मैवम्। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि। 'अन्तः प्रविष्टश्शास्ता जनानां' 'यस्यात्मा शरीर मित्यादिभिः। इन्द्रादिजीवात्मनोपि परमात्मशरीरत्वेन शरीरवाचकाना शब्दानां शरीर्यभिधायकत्वात् इन्द्रशब्देनेन्द्रशरीरकपरमात्माभिधानात् इन्द्रशरीरकपरमात्मन उपास्यत्वेनोक्तदोषाभावात्। अत्रेदं बोध्यम्। यत्र हिरण्यगर्भादिजीवविशेषवाचकाः आकाशाद्यचेतनविशेषवाचकाश्च शब्दा श्रूयन्ते। तत्र

परमात्मा साधारणधर्मयोग: परमात्माभिधायिशब्दसामानाधिकरण्यं वा दृश्यते। तत्र जीवविशेषवाचकानामाकाशाद्यचेतनवाचकानाञ्च शब्दानां परमात्मपरत्वं वक्तव्यम्। तत्र चेतनाचेतनासाधारणलिङ्गादर्शने केवलयोगशक्त्या तेषां परमात्मपरत्वम्। अनन्यथासिद्धचेतनाचेतनासाधारणलिङ्गदर्शने तु चेतनशरीरकपरमात्माभिधायित्व चेतनाचेतनविशेषवाचिनां शब्दानां पूर्वस्मिन् कल्पे परमात्मन एवोपास्यत्वम्। उत्तरस्मिन् कल्पे तु चेतनविशिष्टपरमात्मन उपास्यत्वमिति भेदः। अत एव त्रिविधोपासनं सिद्धमित्याहुश्चाचार्याः —

श्लो॥ परविद्यासु जीवोक्तिः निरुक्त्यादेः पराश्रया।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ इति ।।

उक्तञ्च तत्त्वसारे—(श्लो)

कस्त्वं तत्त्वविदस्मि वस्तु परमं कि तर्हि विष्णुः कथं
तत्वेद परतैत्तरीय्यकमुखत्रैय्यन्तसन्दर्शनात्।
अन्यास्तर्हि गिरः कथं गुणवशादत्राह रुद्रः कथं
तद्दृष्टया कथमुद्भवत्यवतरत्यन्यत्कथं नीयताम् ॥इति।

एवञ्च नारायणस्यैव परमकारणत्वमुमुक्षूपास्यत्वसर्वान्तर्यामित्वसिद्धेस्त्रिमूर्तिसाम्यैक्योत्तीर्णविष्णवन्यव्यक्ति परत्वपक्षाश्चत्वारोऽपि निर्मूला वेदितव्याः। तिसृषु मूर्तिषु परिपूर्ण एवेश्वरस्तिष्ठति।

तत्र विष्णुमूर्तौ साक्षात् प्रजापतिपशुपतिमूर्त्योस्तु जीवद्वारेति विशेषः। एवमेव पिपीलिकादिचतुर्मुखपर्यन्तं सर्वत्र पूर्ण एवेश्वरः। पूर्णत्वञ्च ज्ञानशक्तिबलैश्वर्यादिसमस्तकल्याणगुणविशिष्टत्वम्। अत एव निर्गुणवादोऽपि निरस्तः।

ननु विरुद्धौ गुणविधिनिषेधावनौपाधिकौ कथमेकस्मिन् ब्रह्मणि समन्वेतुं शक्याविति चेद्विचारयामः। न तावदत्र समुच्चयो युक्तः। विरोधात्। अत एव नोभयत्यागः सगुणत्व–निर्गुणत्ववत् तदभावयोरपि विरोधात्। अत एव नोभयत्यागः। सगुणत्वनिर्गुणत्ववत् तदभावयोरपि विरोधात्। न च विकल्पः। अनुष्ठाने विकल्पसम्भवेऽपि वस्तुनो द्वैरूप्यासम्भवात्। न चान्यतरत्यागः। किं त्याज्यमिति नियामकाभावात्। अपच्छेदनयात्पूर्वं त्याज्यमिति चेन्न। तस्यानियतविरोधपौर्वापर्यविषयत्वात्। तथाहि। 'पञ्चर्त्विजस्समन्वारब्धाः प्रसर्पन्ति। अध्वर्युं प्रस्तोतान्वारभते। प्रस्तोतारं प्रतिहर्ता। प्रतिहर्तारमुद्गाता। उद्गातारं ब्रह्मा। ब्रह्माणं यजमान' इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते।

अपच्छेदन्यायः —

बहिष्पवमानं प्रसर्पतामुद्गातुरपच्छेदे सति यद्युद्गातापच्छिद्येतादक्षिणं यागं कृत्वा तेन पुनर्यजेतेति श्रुतिनिरीक्षणेन

जाता उद्गात्रपच्छेदनिमित्तप्रायश्चित्तकर्तव्यताबुद्धिः पश्चात् प्रतिहर्त्रपच्छेदे सति यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसन्दद्यादिति श्रुतिनिरीक्षणेन जातया तद्विरुद्धप्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तकर्तव्यताबुद्ध्या बाध्यत इति ह्यपच्छेदन्यायः। तत्रोद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति। तत्रापि क्रमेणापच्छेदोऽप्यनियतः। क्रमिकत्वेऽप्युद्गात्रपच्छेदः पूर्वभावी इतरश्चरमभावीति वा विपर्ययेणेति वा नियमो नास्ति। अतो विरोधस्य पौर्वापर्यस्य वा यत्र नियमः तत्र नापच्छेदनयः। तत्रापि तन्न्यायप्रवृत्तौ पूर्वशास्त्रस्य सर्वथाऽप्रामाण्यप्रसङ्गात्। तदुक्तम्—

श्लो।। पौर्वापर्यं विरोधश्च पूर्वाप्रामाण्यमेव च।
नियमान्नास्ति तत्रासावपच्छेदनयो भवेत्।। इति।

तथा चानियतपौर्वापर्यविषयोऽपच्छेदन्याय इति। नियमे हि विरोधनयात् परानुत्पत्तिरेव। तन्न्याये हि पौर्वापर्यनियमो विरोधनियमश्च विद्यते। तथा ह्यौदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिः। औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिः। तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति निरपेक्षप्रमाणत्वात्। स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः। अतस्तत्र पौर्वापर्यन्नियतम्। औदुम्बरीस्पर्शतद्वेष्टनयोर्विरोधश्च नियतस्तत्र प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टस्स्यात्। अतो विलम्बितधीहेतोश्शीघ्रधीहेतुर्बलीयानिति न्यायात् पूर्वस्याः श्रुतेः

बलीयस्त्वमित्युत्तरशास्त्रानुदय एव। तथाच प्रकृते निर्गुणशास्त्रानुत्पत्तिरेव विषयव्यवस्थया विरोधपरिहारे सति नान्यतरात्यन्तबाधकापच्छेदन्यायावतारो युक्तः। गुणनिषेधवचसामुत्सर्गापवादनयेन विहितमङ्गलव्यतिरिक्तश्रूयमाणहेयगुणनिषेधपरत्वात् उक्तञ्च तत्त्वसारे—(श्लो)

'यद्ब्रह्मणो गुणशरीरविकारजन्मकर्मादिगोचरविधिप्रतिषेधवाचः अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति यन्न विधय प्रतिषेधबाध्याः॥ इत्यादि।

एवं स्थितेऽपि निषेधस्य प्रतियोगिप्रसक्तिपूर्वकत्वरूपार्थस्वभावप्रयुक्तपरत्वमात्रेण। यदि निर्विशेषवचसा पूर्वबाधः तदा सर्वशून्यवचसा तस्यापि बाधान्माध्यमिकमतविजयप्रसङ्गात्। अत उभयलिङ्ग एव ईश्वरः। उभयलिङ्गत्वञ्च हेयप्रत्यनीकत्वे सति कल्याणगुणगणवत्त्वम्। एतेन निर्विशेषस्यापि ब्रह्मण आच्छादिकयाऽविद्यया तिरोहितस्य विक्षेपिकया तया प्रपञ्चाध्यास एव सृष्टिरित्यपि प्रत्युक्तम्। तस्या विद्यादिदोषगन्धायोग्यत्वात् निर्विशेषस्य तिरोधेयधर्मविशेषाभावात् स्वरूपमात्रतिरोधाने तस्यैव हानिप्रसङ्गात्। किञ्च यदि स्वरूपज्ञान अविद्यानिवर्तक तदा स्वरूपज्ञानस्य नित्यत्वान्नित्यनिवृत्तिप्रसङ्गः। यद्यतिरिक्तं प्रमाणज्ञान ब्रह्मविषयकं तदा सविशेषत्वमभ्युपगमनीयम्। किञ्च ब्रह्मणो निर्विशेषत्वधर्मोऽस्ति वा

न वा? अस्ति चेत्तेन सविशेषत्वम्। नास्ति चेत्तदभावरूप-धर्मेण सविशेषत्वमिति। आहुश्चाचार्याः —

श्लो॥ ब्रह्मणो निर्विशेषत्वमिति धर्मोऽस्ति वा न वा।
द्विधाऽपि सविशेषत्वं तद्योगतदयोगजम्॥ इति।

ननु विमतं मिथ्यादृश्यत्वात् शुक्तिरूप्यवदित्यनुमानेन ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वेन बाधितत्वाद्विशेषाभावेन निर्विशेषब्रह्मस्वरूपमेव वस्त्विति चेन्न। साध्यभूतमिथ्यात्वे मिथ्यात्वमस्ति वा न वा? अस्ति चेत् जगत्सत्यत्वम्। नास्ति चेत्तत्र व्यभिचारः। -ाध्याभावति तत्र दृश्यत्वहेतोस्सत्वात्। आहुश्चाचार्याः —

(श्लो) 'मिथ्यावादिप्रतिज्ञार्थ स्वप्रतिज्ञा स्पृशेन्न वा।
आद्ये स्वस्यैव विध्वसः द्वितीये व्यभिचारिता॥
मिथ्यात्वस्य तु मिथ्यात्वे मिथ्यात्वं बाधितं भवेत्।
सत्यत्वस्य तु सत्यत्वे सत्यत्वं स्थापित भवेत॥ इति।

उपहितानुपहितवेषेण ब्रह्मणोऽपि दृश्यत्वात्। तत्रानैकान्त्य तस्य मिथ्यात्व वा स्यात्।

नन्वनुभूतिरवेद्यानुभूतित्वात् इत्यनुमानेन ब्रह्मण अनु-

भूतिस्वरूपत्वात् वेद्यत्वाभावेन तत्र व्यभिचारो मिथ्यात्वं वा न प्रसजतीति चेन्न। निरुक्तानुमानवेद्यत्वादनुभूतिस्वरूपब्रह्मणः। अवेद्यत्वे त्वनुभूतेर्ब्रह्मणः वेद्यत्वाभावासाधकत्वात्। उभयथाऽपि व्यभिचारस्य दुर्वारत्वात्। आहुश्चाचार्याः —

(श्लो) अनुभूतिरवेद्येति वचनं बोधकन्न वा।
आद्ये तेनैव वेद्यत्वं नो चेत् किन्नु विधीयत॥ इति॥

ब्रह्मणश्चात्यन्तावेद्यत्वे 'अथातो ब्रह्मजिज्ञासा' 'ब्रह्मविदाप्नोति परम्।' 'आत्मावाऽरे द्रष्टव्य' इत्यादिव्याकोपश्च। किञ्च शिष्याचार्ययोरुपदेश्योपदेष्टृभावोऽप्यनुपपन्नः। तथा हि वक्तुः श्रोता किमप्रतीतः उत प्रतीतः? प्रतीतोऽपि भ्रान्तिसिद्धः। प्रमितिसिद्धो वेति विकल्पः। आद्ये अप्रतीतयशिष्यम् कस्मा उपदिशेत्? द्वितीये भ्रान्तिसिद्धं शिष्यं भ्रान्तिसिद्धत्वे नाजानन्नुपदिशति उत जानन् यद्यजानन् तदाऽतत्त्ववित् कथं तत्त्वोपदेष्टा स्यात्? यदि जानन् तदा भ्रान्तिसिद्धस्य कथमुपदेशार्हता? न ह्यनुन्मत्तः स्वयं प्रतिबिम्बाय प्रब्रूते। प्रमितोऽपि किं स्वस्माद्भेदेन प्रमितः? उताभेदेन? आद्ये स्वस्माद्भेदप्रमितौ सत्यां शिष्यायाभेदमुपदिशन् कुहकस्स्यात् द्वितीयेऽद्वैतप्रमितिदशायां स्वभ्रान्तिसिद्धशिष्यासिद्धया स्वस्मा एवोपदेशः कर्तव्यः। इति स्वयं स्वात्मानं प्रति नित्यमुपदिशेत्। अतशिशष्यस्य स्वतादात्म्यं पश्यतस्तस्यापि तत्त्ववित्वादुपदेशे वैय-

र्थ्यमिति। अतस्सर्वेश्वरो नारायण एवापहतपाप्मा कल्याणगुणगणो जगत्कारणं ब्रह्मेति तदेव जगतो निमित्तमुपादनञ्च। न च ब्रह्मण उपादानत्वे निर्विकारत्वश्रुतिविरोध इति वाच्यम्। सूक्ष्मचिदचिद्विशिष्टब्रह्मण उपादानत्वेन विशेषणीभूतचिदचितोरेव विकाराश्रयत्वेन ब्रह्मणो निर्विकारत्वात्। यथा देवमनुष्यादिशरीरविशिष्टे स्वरूपतो निर्विकारे पुंसि शरीरगतबालत्वयुवत्वस्थविरत्वाद्यस्पर्शेन निर्विकारत्वं तद्वत्। विशिष्टवेषेण ब्रह्मणो विकाराश्रय त्विष्टमेव।

अभिन्ननिमित्तत्वसमर्थनम् :—

ननु निमित्तत्वमुपादानत्वञ्च एकस्य न सम्भवति। तयोर्भिन्नाश्रयवृत्तित्वनियमात्। अत एव हि समवायिकारण भेदघटितं निमित्तकारणलक्षणन्न्यायविदो वदन्ति। समवाय्य-समवायिभिन्नं कारण निमित्तकारणमिति। समवायिकारणोपादानशब्दयोरेकविषयत्व प्रसिद्धम्। घटादिनिमित्तकारणदण्डादेस्तदुपादानभूतमृदादेश्च भेदः प्रत्यक्षेणावगम्यते। अत एव श्रुतेरपि न तत्सिद्धिः। प्रत्यक्षविरुद्धे तासां तात्पर्यायोगात्। अत एव 'ह्यादित्यो यूपो यजमानः प्रस्तरः कृष्णलं श्रपयेदित्यादौ प्रतीतार्थादर्थान्तरे लक्षणा स्वीकृता मीमांसकैः। एव ब्रह्मनिमित्तमुपादानत्वात् [illegible]

दानं निमित्तत्वात् दण्डादिवत्। इत्यनुमानाभ्यां तयोर्भिन्नाश्रयत्वमपि निश्चीयते। श्रुतिश्च 'मायां तु प्रकृतिं विद्यात मायिनन्तु महेश्वरमिति मायामायिनोरुपादाननिमित्तयोर्भेदं वदति। अतो न ब्रह्मोपादाननिमित्तञ्चेति। अत्रोच्यते—निमित्तोपादानयोर्भेदः प्रत्यक्षानुमानाभ्यामवगन्तुं न शक्यते। घटादिनिमित्तस्यापि दण्डादेः स्वीयरूपाद्युपादानत्वस्य प्रत्यक्षसिद्धत्वात्। अत एव समवायिकारणभेदघटितनिमित्तकारणलक्षणमपि न्यायविदामयुक्तम्। समवायिकारणत्वावच्छिन्नप्रतियोगिताकभेदविवक्षायां दण्डाद्यव्याप्तेः। यत् किञ्चित्समवायिकारणभेदविवक्षायां ब्रह्मणि तत्सम्भवात्।

ननु तदुपादानभेदः तन्निमित्ते विवक्षितः। अतो न दण्डाद्यव्याप्तिः। न वा ब्रह्मणि तत्सम्भवः। तस्यैक प्रत्येवोपादानत्वनिमित्तत्वयोः स्वीकारादिति चेन्न। तथा सति ध्वंस प्रति दण्डादेर्निमित्तत्वाभावप्रसङ्ग। तदुपादानाप्रसिद्ध्या तद्भेदघटितलक्षणाप्रसिद्धेः। कालघटसंयोगं इति कालस्य निमित्तत्वादुपादानत्वाच्च तत्रातिव्याप्तेश्च। अथोपादानकारणताभिन्नकारणत्वं निमित्तत्वमित्येव विवक्षितम्। तद्भेदश्च तदवच्छेदकभेदात् अस्ति चावच्छेदकद्वय कालघटसंयोगादिस्थलेऽपि समवायेन कार्यं प्रति तादात्म्येन द्रव्यत्वेन हेतुत्वेन द्रव्यत्वस्यैवोपादानतावच्छेदकत्वात्। कार्य—

त्वावच्छिन्नं प्रति कालत्वेन कालस्य हेतुतया कालत्वस्य निमित्ततावच्छेदकत्वात् उपाधेयसङ्करेऽप्युपाधेरसङ्कराच्च। अतो न कालाद्यव्याप्तिः। अत एव न दण्डाद्यव्याप्तिरपि। तत्रापि द्रव्यत्वदण्डत्वयोरुपादानतावच्छेदकनिमित्ततावच्छेदकयोर्भेदेन तदवच्छिन्नत्वतद्गतोपादानत्वनिमित्तत्वयोर्भेदादुपादानतावच्छेदक धर्मानवच्छिन्नकारणत्वन्निमित्तत्वमिति स्वीकाराच्च। न ध्वस प्रति दण्डादेर्निमित्तत्वानुपपत्ति। दण्डत्वस्याप्युपादानतावच्छेदकत्वादित्युच्यते। तर्हि ब्रह्मण्यपि नोपादानत्वनिमित्तत्वयोर्विरोधः। तस्य सूक्ष्मचिदचिद्विशिष्टत्ववेषेणोपादानत्वात्। स्वरूपेण निमित्तत्वाच्च। तदवच्छेदकभेदप्रयुक्तत्भेदस्य तत्रापि सत्वात् इति। अत्रेदं बोध्यम्। उपादानत्वं हि न ब्राह्मणः स्वरूपेण सम्भवति। निष्कलन्निष्क्रिय शान्त निरवद्यान्निरञ्जनम्। अविकाराय शुद्धायेत्यादिभिर्निर्विकारत्वेन ब्रह्मस्वरूपप्रतिपत्तेः। किन्तु चिदचिद्विशिष्टवेषेण। तद्वैशिष्ट्यञ्च शरीरशरीरिभावेन। शरीरःगतविकारादिदोषाश्शरीरिणि न स्पृश्यन्ते। यथा मनुष्यादिशरीरविशिष्टात्मनि शरीरगतबालत्वयुवत्वादिरूपावस्था न संयुज्यन्ते। तद्वत् चिदचिदोः ब्रह्मशरीरकत्वञ्च 'यस्य पृथिवीशरीरं, 'यस्यापश्शरीर' मित्यारभ्य 'यस्यात्मा शरीरं' 'यस्याव्यक्तं शरीरं' 'यस्य मृत्युश्शरीरमित्यन्तेनान्तर्यामिब्राह्मणेनावगम्यते'। 'जगत्सर्वं शरोरं ते।' 'तानि सर्वाणि तद्वपुः'। "तत्सर्वं वै हरेस्तनुः'। 'यदम्बु वैष्णवः कायः' इत्यादिमहर्षिवचनैरपि इद-

मेवोपष्टभ्यते। अतस्सूक्ष्मचिदचिद्विशिष्टं ब्रह्म जगदुपादानमिति।

अशरीरशब्दार्थः —

अथाशरीरं शरीरेषु।
'स पर्यगाच्छुक्रमकायमव्रणं अपाणिपादो जवनो ग्रहीता।
पश्यत्यचक्षुस्स शृणोत्यकर्णः'

यत्तद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादमस्थूलमनण्व-ह्रस्वमित्यादिभिस्साक्षात्परम्परया च ब्रह्मणश्शरीरनिषेधात् कथं पृथिव्यादीनां ब्रह्मशरीरत्वमुच्यत इति चेदुच्यते। प्रतिषेधस्ता-वत्प्रतियोगिप्रापकप्रमाणमपेक्षमाणो यदि शास्त्रादन्यत्प्रापकं पश्यति तदा तन्मात्रमादाय विश्रान्तो न शास्त्रप्राप्तं उपरुणद्धि। यथा 'न हिंस्यात्सर्वभूतानि' इत्यादिकं रागप्राप्तहिंसामादाय विश्रान्तं सत् 'नवैधाग्नीषोमीयहिंसामुपस्पृशति। तथा अशरी-रत्वादिश्रुत्यवगतशरीरादिनिषेधोऽपि लोकप्रतिपन्नकर्मकृतशरीरा-दिकमादाय विश्रान्तो न श्रुतिप्राप्तपृथिव्यादिशरीरनिषेधाय यतत इति। न तद्विरोधात् यस्य पृथिवी शरीरमित्यादेस्तत्र तात्पर्याभावश्शङ्क्य। न ह्यलौकिकार्थप्रतिपादनैकस्वर्येण प्रवृत्तं शास्त्रं मानान्तरागोचरं विषयं स्वयमेव प्रतिपाद्योन्मत्तवत् स्वयमेव प्रतिषेधतीति युक्तमाश्रयितुम्। अतो निषेधश्रुतीनां कर्मकृतशरीरनिषेधपरत्वेनाकर्मकृतपृथिव्यादिशरीरकत्वं ब्रह्मण

उपपन्नतरम् ।

'न च न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वावसन्तन्नप्रियाप्रिये स्पृशत'

इति शरीरसम्बन्धस्य हेयसम्बन्धाविनाभावबोधनात् सर्वशरीरस्य तत्तत्प्रयुक्तहेयसम्बन्धोऽपि दुर्वार इति वाच्यम्। तत्र ह वै शब्दनिर्देशेन लौकिकप्रसिद्धकर्मकृतशरीरत्वस्यैव हेयव्याप्यत्वप्रतीतेः।

नन्वेवमपि हेयजीवशरीरान्तर्यामित्वेन तत्सम्प्रयुक्तदुःखानुभवस्स्यादिति वाच्यम्। दण्ड्यदण्डकयोरेककारागृहवर्तिनोऽपि यातनाहेतुभूतपाकसद्भावासद्भावाभ्यां दुःखतदभावयोर्दर्शनेन तत्र कारागृहसम्बन्धस्येव इह शरीरसम्बन्धमात्रस्याप्रयोजकत्वात्। 'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीतीति शरीरसम्बन्धाविशेषेऽपि जीवपरमात्मनोः कर्मफलभोक्तृत्वतदभावयोः श्रुत्यैव प्रमितत्वेन कर्मकृतशरीरसम्बन्धस्यैव हेयसम्बन्धव्याप्यत्वनिश्चयेन तद्विरोधेन शरीरसम्बन्धमात्रे हेयव्याप्यतायास्तद्वाक्यतात्पर्यविषयत्वायोगाच्च। 'एष त आत्मान्तर्याम्यमृत' इति पृथिव्यादिशरीरताप्रतिपादकवाक्येषु प्रतिपर्यायमन्तर्यामिणश्शरीरसम्बन्धप्रयुक्तहेयसम्बन्धगन्धव्यावृत्तिफलकामृतत्वप्रतिपादनविरोधाच्च।

अथ स्याद्वस्तु निमित्तत्वोपादानत्वयोरविरोधः। तथापि ब्रह्मणस्तदुभयसद्भावे मानाभावः। तत्र न तावत् प्रत्यक्षम् अतीन्द्रिये तदप्रवृत्तेः। अत एवानुमानमपि न मानम्। तस्य प्रत्यक्षावगतव्याप्तिज्ञानादिमूलकत्वात्। आगमोऽपि तदुपादानत्व ग्राहकोऽनन्यथासिद्धोऽसिद्धः 'यतो वेत्यादेर्निमित्तत्वेनाऽप्युपपत्तेः न हि पञ्चमी उपादानत्वमात्राभिधायिनी। 'दण्डाद्घटो जायत इत्यादौ व्यभिचारादिति चेदत्रोच्यते। 'यतो वा इमानि भूतानीत्यादिषु' यत इत्येषा पञ्चमी न तावत्कारणमात्रपर तत्र तद्विधायकशास्त्राभावात्। हेताविति सूत्रेण तत्र तृतीया विधानात्। ध्रुवमपायेऽपादानमित्यारभ्य भुवःप्रभव। इत्यन्तान सूत्राणां सर्वव्यापकात् ब्रह्मणो विश्लेषासम्भवेनापादानसञ्ज्ञावि धायकानां तत्रासम्भवाच्च। अतो जनिकर्तुः प्रकृतिरिति सूत्रे णैव सा वाच्या। प्रकृतिशब्दश्चोपादानार्थकः। मृद्घटादि प्रागुत्तरावस्थापन्नेष्वेव प्रकृतिविकाराभावप्रसिद्धेः। दण्डघटादि तदप्रसिद्धेश्च सर्वविकारकारणे प्रधाने प्रकृतिशब्दप्रसिद्धेश्च यद्यपि 'विभाषा गुणे स्त्रियामिति सूत्रादस्त्रियमिति योगवि भागेन' पुत्रात् प्रमोदो जायते 'धूमाद्वह्निमानित्यादिवत्' यत वेत्यत्रापि निमित्तपञ्चम्युपपादयितुं शक्या। तथाऽपि 'यत्प्रय न्त्यभिसंविशन्तीति' उत्तरवाक्ये लयाधिष्ठानत्वप्रतिपादने निमित्तकारणे तदसम्भवेन उपादानपञ्चमित्वनिश्चयात्। यत्प्र यन्त्यभिसंविशन्तीति नैतत्तिङन्त पदद्वयम्। तथा सति पूर्व

वाक्यद्वय इव यच्छब्दद्वयश्रवणापत्तेः। किन्तु प्रयन्तीत्येतन्नपुं-सकप्रथम बहुवचनान्तम्। जातानीतिवत् इमानीत्येतस्य विशे-षणम्। तथा च प्रयन्ति प्रलीयमानानि सन्ति भूतानि यद-भिसविशन्ति। यदवस्थां प्राप्नुवन्तीत्यर्थः। कारणावस्थां प्रा-प्नुवन्तीति यावत्। 'पृथिव्यप्सु प्रलीयत 'इत्यारभ्य' तमः परे देव एकीभवतीन्येकत्वावस्थापत्तेरेव लयरूपत्वाभिधानात्।

श्लो॥ 'अग्न्यवस्थे च सलिले वाय्ववस्थे च तेजसि' इति

विष्णुपुराणोपबृंहणाच्च। अतःकारणावस्थापत्तिरूपलयप्रतिपाद-काभ्या प्रयन्त्यभिसविशन्तिभ्यां पदाभ्या' यत 'इत्युपादानप-ञ्चम्यन्तादेव इयन्तसिलिति निश्चीयते। युक्तञ्चैतत् प्रतिपद-विहिततसिलन्तत्व-म्भवे लाक्षणिकतसिलन्तत्वाश्रयणासम्भवात्। अतो' यत 'इत्यनेन उपादानत्वमेवाभिधीयत इति। एव कस्मिन्नु खलु भगवो विज्ञाते इदं सर्व विज्ञात भवति। 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदसर्व विदितं भवति। तमादेशमप्राक्ष्यो येनाश्रुतं श्रुत भवत्यमतं मतमविज्ञात विज्ञातं भवतीत्येकविज्ञानेन' सर्वविज्ञानप्रतिज्ञानमपि ब्रह्मणस्सर्वोपादानत्वे प्रमाणम्। न हि निमित्तकारणज्ञानात् कार्यज्ञान सम्भवति। दण्डादिज्ञानेऽपि ततोऽत्यन्तविलक्षणस्य घटादेर्ज्ञानासम्भवात्। उपादानज्ञाने तु तदुपादेयज्ञानं सम्भवति। पूर्वाह्ले येयं मत्तिका

दृष्टा सैवेदानीं घटशरावादिरासीदित्येकत्वाध्यवसायेन तयो-रेकज्ञानविषयत्वनिश्चयात। यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति दृष्टान्तप्रदर्शनेनास्यैवार्थस्य दृढी-करणाच्च। 'वाचारम्भण विकारो नामधेयं मृत्तिकेत्येव सत्य मिति' व्यवहारोपयोगितया घटशरावादिनामधेयतन्निमित्तघटत्वा वस्थाभेदेऽवस्थावतो द्रव्यस्यैक्यतया तज्ज्ञानस्य लोकसिद्धत्वो पपादनाच्च।

ननु यद्युपादानोपादेययोरभेदस्तदा सर्वविज्ञानप्रतिज्ञान मेवानुपपन्नम्। सर्वासम्भवात्। स्वज्ञाने स्वज्ञानहेतुत्वस्यात्मा श्रयेणासम्भवाच्च। अथ पूर्वकलत्वोत्तरकालत्वपिण्डाकारत्व-घटाकारत्वजलाहरणाद्युपयोगित्वतदनुपयोगित्वनामभेदादिभिर्भेद इष्यते। तयोस्तथापि तदनुपपत्तिरेव। अन्यज्ञानेनान्यज्ञानास-म्भवात्। अतः प्रधानभूते ब्रह्मणि ज्ञाते ज्ञातव्यान्तराभावा-दितरस्य ज्ञातप्रायत्वं सर्वविज्ञानप्रतिज्ञानविषय इति युक्तमा श्रयितुमिति चेदुच्यते। उपादानोपादेययोर्वास्तवाभेदेऽपि प्रागु-त्तरकालकार्याकारभेदादिप्रयुक्तभेदव्युदासाय सर्वविज्ञानं तावद' वश्यकं प्रागवस्थाविशिष्टस्वज्ञानस्योत्तरावस्थाविशिष्टस्वज्ञानं प्रतिहेतुत्वञ्चाविरुद्धम्, विशेष्यैक्येऽपि प्रकारभेदेन तज्ज्ञानयो रपि विलक्षणत्वात्। कारणैक्येऽपि कार्यभूतघटशरावादेः पर स्परविलक्षणत्वेन सर्वशब्दार्थसम्भवाच्च। न च कालाकारा-

दिभेदात्तयोर्भेदशशङ्क्य । अवस्थाभेदाश्रयणेनान्यथासिद्धस्य तस्य वस्तुभेदं प्रत्यसाधकत्वात् । अन्यथा बालत्वयुवत्वादिप्रयुक्तका-लाकारादिभेदेन देवदत्तादेरपि भेदप्रसङ्गात् । कार्यकारणयोर-त्यन्तभेदे सर्वविज्ञानप्रतिज्ञानुपपत्तेश्च । अथैवमपि प्रागवस्था-विशिष्टतज्ज्ञानादुत्तरावस्थाविशिष्टतज्ज्ञानमस्तु । नैतदेकविज्ञा-नेन सर्वविज्ञानप्रतिज्ञाविषयः । प्रागवस्थाविशिष्टचिदचिज्ज्ञानेन उत्तरावस्थाविशिष्टतज्ज्ञानसम्भवेऽपि न ब्रह्मज्ञानेन कृत्स्न-विज्ञानम् । तदनन्तर्भूतत्वात् । अत एव न तद्बलाद्ब्रह्मण उपादानत्वसिद्धिः । कार्यज्ञानहेतुज्ञानविषयत्वस्य चिदचितोरेव पर्यवसानेन ब्रह्मणि तत्प्रसक्तिगन्धाभावात् । ब्रह्मण्यवस्थाद्वया-सम्भवे नोपादानोपादेयभावासम्भवात् । परिणम्यमाणचिदचि-त्सम्बन्धमात्रेणोपादानत्वे पारिभाषिकं तत्स्यादिति ।

अत्रोच्यते । 'यस्य पृथिवी शरीरं' 'यस्याव्यक्तं शरीरमित्यादिभिरुक्तन्यायेन चिदचितोर्ब्रह्मशरीरत्वं दुरपह्नवम् शरीरवाचिनश्शब्दास्तद्विशिष्टात्मपर्यन्ता इति । 'ब्राह्मणोऽग्नि-मादधीत' 'देवदत्तो गच्छतीत्यादि लौकिकवैदिकव्यवहारबला-दवगम्यते । कारणवाक्यगताश्च सद्ब्रह्मात्मशब्दा विशिष्टपर इति 'सदेव सोम्येदमग्र आसीत्' ब्रह्म वा इदमेक एवाग्र आसीदिति सामानाधिकरण्यान्निर्णीयते । उपादेयत्वमपि स्थूला वस्थचिदचिद्विशिष्टस्यैवेति सामर्थ्यात् 'किं स्विद्वनं क उ

वृक्ष आसीदिति' प्रश्ने 'ब्रह्म वनं ब्रह्म स वृक्ष आसीदित्यु-त्तरादवगम्यते। वनवृक्षशब्दयोः स्थूलसूक्ष्मावस्थोपलक्षणार्थत्वात्। अत एव 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्तेत्यादौ तेज आदे-स्सङ्कल्पश्रवणं तत्कार्योपादानत्वञ्च वर्ण्यमानन्तच्छरीरकब्रह्म-परतया सम्यगुपपद्यते। अन्यथा तेजः प्रभृतेरचेतनस्य बहुभव-नसङ्कल्पतदनुगणकार्यारम्भकत्वयोगात्। अतः प्रागवस्थापन्नद्र-व्यविशिष्टं स्वं ब्रह्मैवोपादानमिति औपनिषदतात्पर्यमवगम्यते।

अनेनजीवेनेत्यस्यार्थः

अत एव 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेना-त्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यत्र व्याक्रियमाणयोर्ना-मरूपयोस्स्वपर्यवसानायैवानुप्रविश्येत्यनुप्रवेशोऽपि व्याकरणार्थम-भिधीयते। अन्यथा पित्रादिवदननुप्रविश्यैव नामरूपं व्याकरण कुर्यात्। अत एव तत्सृष्ट्वा। तदेवानुप्राविशत्। 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यादावनुप्रवेशफलभूतस्सत्यद्भावोऽपि श्रूयते। अत एव 'तदैक्षत बहुस्या प्रजाययेति।' 'तदात्मानं-स्वयमकुरुत' इत्यादौ स्वात्मन एव बहुरूपतासङ्कल्प.। तदा करणञ्च श्रूयते। स्यामित्युत्तमपुरुषश्च श्रूयते। अतो विशिष्ट-मेव ब्रह्मोपादानमुपादेयञ्चे येन विज्ञानेन सर्वविज्ञानमपि तद्विष-यमेवेति। अथ विशिष्टमिति किमेतत् विशेषणविशेष्याभ्या-मनतिरिक्तं अतिरिक्त वा। आद्येन ब्रह्मण उपादानत्वसिद्धिः।

अन्त्ये त्वचेतनस्येव चेतनयोर्जीवब्रह्मणोरपि उपादानात्वं वक्त-व्यम्। न च तद्युक्तं विकारवत् कारणत्वं हि उपादनत्वम्। न ह्यपरिणामिनोस्तयोः स्वरूपविकारस्सम्भवति। यद्यपि ज्ञान-सङ्कोचविकासात्मकस्वभावविकारो जीवे सम्भवति। तथापि ब्रह्मणि न तत्सम्भवः। तस्यासङ्कुचितज्ञानत्वात्। सङ्कोच-विकासात्मकविकारस्य ज्ञानरूपधर्मगतत्वेन धर्मिणि जीवे कथ-ञ्चिदपि तदपि तदसम्भवाच्च। परम्परया विकाराश्रयत्वमादाय उपादानत्वे कुलालादेरप्युपादानत्वप्रसङ्गात्। एतेन चिदचिद्द्वारा विकाराश्रयत्वमादाय ब्रह्मण उपादानत्वाशापि प्रत्युक्तेति चेदत्र ब्रूमः। विशिष्टमुपादानं तच्च विशेषणविशेष्याभ्यामनतिरिक्त-मेव। तथाऽपि असत उत्पत्त्यसम्भवात्। प्रळयकालेऽपि सूक्ष्मा-वस्थापन्नचिदचितोरवस्थितिः स्वीकर्तव्या। तदानीमपि 'यस्या-व्यक्तं शरीरं' 'यस्याक्षरं शरीरमित्यादिना विभक्तावस्थयो श्चिदचितोर्ब्रह्मशरीरत्वं प्रतिपाद्यते। तच्च विशिष्टस्य भाव्य-वस्थालक्षणोपादेयत्वोपयोगिप्रागवस्थासम्पत्त्यर्थं उच्यते। तत्र च विशेषणीभूतस्याचेतनस्य सूक्ष्मावस्थाप्रहाणेन स्थूलावस्थाप-त्तिरूपस्वरूपान्यथाभावेन कार्यत्वम्। तथाविधस्य चेतनस्य तु नित्यनिरवयवस्य स्वरूपान्यथाभावासम्भवात्। स्वसाधारणस्व-रूपनिरूपकधर्मभूतज्ञानद्वारकान्यथाभावेन कार्यत्वम्। सङ्कुचि-तस्य ज्ञानस्य तस्य तद्विकासापत्तिरेव ठि कार्यत्वम्। मृद्घटो जातः। आत्माभिज्ञो ज्ञात इति तुल्यव्यवहारात्। तथा च

शरीरभूतचिदहिद्वारकं परमात्मनोऽप्युपादानत्वम्। तच्च मुख्य-मेवास्ति च। तत्र साक्षादप्यवस्थाद्वयं सूक्ष्मचिदचिन्नियमनं स्थूलश्चिदचिन्नियमनञ्चेति। अतः स्वासाधारणधर्मभूतनियम-नरूपस्वभावान्यथाभावः परमात्मन्यपि सुलभः। न च पर-म्परया तदाश्रयणेऽतिप्रसङ्गः। अपृथक्सिद्धितदभावाभ्यां वैल-क्षण्यात्। 'देवदत्तो यजत' इत्यादौ शरीरद्वारकं कायशेषणा दिकं तदवयवद्वारकं च मन्त्रोच्चारणादिकमद्वारकञ्च सङ्कल्पा-दिकमादाय देवदत्तादेर्यागकर्तृत्वं तत्फलभोक्तृत्वञ्च मुख्यम्। यथा वा ग्राहकप्रमाणेन सन्निधिसमाम्नातेषु वस्तुषु परमात्म-पूर्वतयावगतेषु यागव्रीह्यादेरद्वारकशेषत्वं प्रोक्षणादेस्सद्वारकशेषत्वं मुख्यमेवावगम्यते। तथा बहुस्यामिति ग्राहकग्रहणेन सर्वाव-स्थासु परमात्मीयतयावगतासु स्वरूपान्यथाभावज्ञानसङ्कोच-रूपसद्वारकावस्थायास्तन्नियमनरूप।द्वारकावस्थायाश्च परमात्मी-यत्वं मुख्यमेव। न चैवं युवत्वावस्थायुक्तशरीरविशिष्टात्मानं प्रति बालत्वावस्थायुक्तशरीरद्वारकं देवदत्तादेरुपादानत्वं स्या-दिति वाच्यम्। इष्टत्वात्। तत्रापि विशिष्टपरिमाणानपायात्। न चैवं 'बालाद्युवा जायत' इति प्रयोगापत्तिः। मृद्घटो जायत इतिवत्। बालो युवा जात इति प्रयोगाव्यतिरेकात्। उपादानपञ्चम्यप्रयोगस्तु तदुत्तरावस्थोत्पत्त्युपयोगि प्रागवस्थद्रव्य-तत्परिणामयितात्मगतव्यापारविशेषकालविशेषापरिज्ञानात्। यत्तु-विशिष्टस्य विशिष्टं प्रत्युपादानत्वे चिदचिदीश्वराणां परस्परं

स्वरूपसाङ्कर्यंस्स्यादिति। तत्तु शुक्लकृष्णरक्ततन्त्वारब्धपटे तदशे तत्तद्भेदभिन्नतन्तूनामेवोपादानत्वाश्रयणात् न शौक्ल्यादिसाङ्कर्यम्। तद्वत्परिहृतम् तथाच प्रकृतेऽपि विशिष्टस्य विशिष्टोपादानत्वेऽप्यौचित्याच्चिदंशे चिदशस्याचिदंशेऽचिदशस्य ब्रह्मांशे ब्रह्मांशस्योपादानत्वा ङ्गीकारात् न स्वरूपस्वभावसाङ्कर्यप्रसक्तिः। चैवं ब्रह्मणो ब्रह्म प्रत्येवोपादानत्वात् प्रपञ्चोपादानत्वन्न सिद्ध्यतीति वाच्यम्। तस्य स्वशरीरभूतसूक्ष्मावस्थचिदचिद्द्वारा स्थूलावास्थचिदचिद त्मकप्रपञ्चं प्रत्युपादानत्वात्।

देवदत्तो गच्छतीत्यादौ शरीरद्वारकगमनाद्याश्रयत्वस्य देवदत्तात्मनीव चिदचिद्द्वारा अवस्थाश्रयत्वस्य ब्रह्मण्यपि मुलभत्वात्। न च व्यवधानमात्रादुपादानमात्रस्य गौणत्वं देवदत्तो गच्छतीत्यत्र गन्तृत्वस्य शरीरद्वारकत्वेऽपि देवदत्ते गन्तृत्वस्येव जलं वहतीत्यत्र घटादिद्वारकत्वेऽपि जलवहनस्येव च मुख्यत्वोपपत्ते.। अतो ब्रह्म जगत उपादानन्निमित्तञ्चेति सिद्धम्।

ननु अनेन जीवेनेति श्रुत्यानुप्रवेशव्याकरणयोरीश्वरैककर्तृत्वमभिधाय्यत इत्युक्तम् तदनुपपन्नम्। आत्मनेति तृतीयानुपपत्तेः। व्याकरवाणीति तिङा कर्तुरभिधानेनानभिहिताधिकारतृतीयाया अप्राप्तेः। न च व्याकरणकर्तुस्तिङाभिहितत्वेऽपि अनुप्रवेशकर्तुरनभिधानात ततीया भविष्यतीति वाच्यम। तथा सति

मया भुक्त्वा व्रजानीति प्रयोगस्य साधुत्वापत्तेः। वृजिक्रिया-कर्तुः अभिहितत्वेऽपि भुजिक्रियाकर्तुरनभिधानात्। न च जीव-स्यैवानुप्रवेशकर्तृत्वं व्याकरणक्रियाकर्तृत्वं त्वीश्वरस्येति तिङा व्याकरणकर्तुरभिधानेऽपि अनुप्रवेशकर्तुरनभिधानात्तृतीयोपपत्ति-रिति वाच्यम्। तदनुप्रविश्येति त्वाप्रत्ययानुपपत्तेः। समान-कर्तृत्व एव त्वाप्रत्ययविधानात्। अन्यथा देवदत्तकर्तृकभोजने यज्ञदत्तकर्तृकव्रजने च भुक्त्वा व्रजतीति प्रयोगस्य साधुत्वा-पातात्।

यदि तिङन्तक्रियाया एव प्राधान्यम्। तदन्वयिक्रिया-यास्तु अप्राधान्यं तत्क्रियास्थानयोरपि कारकशक्त्योस्तद्वारा गुणप्रधानभावः। तथाचात्र तिङन्तव्रजिक्रियाकर्तुस्तिङाभिहि-तत्वेन तदप्रधानभुजिक्रियाकर्तुश्चाभिहितत्वात्। मयेत्यस्यासा-धुत्वं गुणानां प्रधानानुवृत्तिन्यायादित्युच्यते। तदा व्याकरवा-णीत्यत्रापि प्रधानभूतव्याकरणक्रियाकर्तुरभिहितत्वेनाप्रधानभूता-नुप्रवेशक्रियाकर्तुश्चाभिधानात्तृतीयानुपपत्तिस्स्यादेवेति चेन्नैवम्। आत्मनेत्यस्य स्वरूपेणेत्यर्थः। जीवेनेत्यस्य जीवशरीरकेणेत्यर्थः। यस्यात्मा शरीरमिति श्रुतेः। तदनुप्रविश्येत्यचेतन इव चेतनेऽप्य-नुप्रवेशश्रवणाच्च शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वस्य मुख्यतया प्रतिपन्नत्वाच्च। जीवशरीरकेण स्वरूपेणानुप्रविश्य व्याकरवा-णीत्यर्थः। यद्यपि जीवशरीरकं स्वरूपं व्याकरणकर्तुर्न भिद्यते।

तथापि व्यपदेशिवदेकस्मिन् बुद्धया नानात्वकल्पनेति न्यायेन कल्पितभेदमादायानभिहिताधिकारविहिततृतीयोपपत्तेः। घटः स्वेन रूपेणेतरव्यावृत्तिं करोतीत्यादिप्रयोगदर्शनात्। ननु तत्र करणार्थे तृतीया। करणत्वञ्च न तिङाऽभिहितमिति चेत् तर्हि प्रकृतेऽपि आत्मनेति करणे तृतीयाऽस्तु।

श्लो॥ 'तेनेशस्तद्विशिष्टस्वकरणकतयाऽनुप्रवेशेऽपि कर्ता'

इत्यधिकरणसारवल्युक्तेः। व्याकरणकर्तुः स्वस्यानुप्रवेशे साधकतमत्वविवक्षया करणत्वोपपत्तेः। अत्र करणत्वकर्तृत्वयोरेकस्मिन्नपि विवक्षाधीनत्वेन सम्भवात्। पट स्वेन रूपेणेत्यत्र तथैव दर्शनात्। तथाच जीवशरीरक स्वात्मानं साधनीकृत्याहमनुप्रविश्य नामरूपे व्याकरवाणीत्यर्थस्सम्पद्यते। अतोऽनुप्रवेशव्याकरणक्रिययोस्समानकर्तृकत्वादात्मनेत्यस्य करणत्वाच्च न त्वाप्रत्ययतृतीययोरनुपपत्तिरिति संक्षेपः। एतेन शैवपातञ्जलकाणदादीनान्निमित्तमात्रेश्वरवादो निरस्तः।

ईश्वरानुमाननिरासः —

ननु क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटादिवदित्यनुमानेन निमित्ततयैवेश्वरस्सिद्धयतीति चेन्न। सपक्षे घटादौ कर्तुः कुलालादेः कायकरणकर्मादीनां दर्शनात्। पक्षेऽपि काय-

करणादिमान् कर्तैव सिद्ध्यतीति ततो विलक्षणस्य शरीरिणो सम्भवेन बाधात्। न च घटादिजनककुलालकृतेर्जन्यतया शरीरादिसापेक्षत्वेऽपि क्षित्यादिकृतेरजन्यतया कर्तुश्शरीरापेक्षाद्यसंभवादशरीर्येव तत्कर्तेति वाच्यम्। तथा सति घटादिकृतेर्जन्यतया ज्ञानचिकीर्षापूर्वकत्वेऽपि क्षित्यादिकृतेर्नित्यतया ज्ञानचिकीर्षयोरनपेक्षणात्। क्षित्यादिकर्तुश्शरीरवत् ज्ञानचिकीर्षयोरपि त्यागप्रसङ्गात्।

ननु प्रयत्नस्य स्वतस्सविषयकत्वे ज्ञानत्वप्रसङ्गेन ज्ञानेच्छाधीनमेव सविषयकत्वं वाच्यमिति तयोरप्यावश्यकत्वमिति चेन्न। जीवनयोनियत्नस्य ज्ञानाद्यधीनस्य सविषयकत्ववदेतस्यापि सविषयकत्वे बाधकाभावात्। जीवनादृष्टवशात् तस्य सविषयकत्वाङ्गीकारे क्षित्यादिकर्तृप्रयत्नस्यापि भोजकादृष्टवशात् सविषयत्वमिति वक्तुं शक्यत्वात्। त्वयाप्येतदङ्गीकार्यम्। अन्यथा नित्यज्ञानेच्छाप्रयत्नानां सर्वदा सर्वगोचरत्वेन विषयनियमाभावे युगपत्सर्वकार्यौत्पत्तियुगपदनायाससर्वमोक्षादिप्रसङ्गात्। सहकारिक्रमात् क्रमिककार्योत्पत्तिवचनं न युक्तिसहम्। सहकारिणामपि कार्यत्वाद्युगपदेव तदुत्पत्तिनिवृत्त्योः प्रसङ्गात्। प्रयत्नस्य च समस्तवस्तुगोचरज्ञानसमानविषयत्वे नित्यवस्तूनामपि तत्प्रयुक्तविषयत्वप्रसङ्गेन तेषामपि सृष्टिसंहारादि स्यात्। तेषां नित्यत्वेन स्रष्टुं संहर्तुं वा शक्यत्वादशक्यप्रयत्नवतः ईश्वरस्या-

नीश्वरत्वं वा स्यात्। अस्तु तर्हि एवमदृष्टैकनियतप्रयत्नवानीश्वर इति चेज्जीवस्यैवानित्यप्रयत्नवतस्तथाविधनियमोपपत्तेर्न तदतिरिक्तकर्तृसिद्धिः।

नन्वङ्कुरगोचरप्रयत्नो न केनाप्युपलभ्यत इति चेन्न। जीवनपूर्वकप्रयत्नेऽपि समत्वात। कार्यादेव तत्र कल्प्यत इति चेत्तत्रापि समम्। अदृष्टस्य च सर्वकार्यनिमित्तस्य नियामकत्वे किमदृष्टनित्यप्रयत्नकल्पनप्रयत्नेन। आहुश्चाचार्याः —

श्लो॥ 'सर्वगत्वादनियमो नित्यगत्वादुपद्रवः।
अदृष्टान्नियमे नित्ययत्नोऽजाजागलस्तनः॥
स्वादृष्टपरतन्त्रस्स्यादरात्मा क्वचित् कवचित्।
परादृष्टपराधीनस्सर्वत्रैव भवेत्परः॥ इति॥

किञ्च नित्यज्ञानादिकं किं दृष्टं उत कल्पितम्? नाद्य। असिद्धेः। न च द्वितीयः। दृष्टविजातीयक्लुप्त्ययोगात्। मूर्तद्रव्यवद्विभूनां विभुना संयोगे कल्प्यमाने संयोगकारणानामन्यतरकर्मोभयकर्मसंयोगानामभावात्तन्निषेधो यथा स्वीकृतः तथा ज्ञानकरणादीनामिन्द्रियलिङ्गादीनामसम्भवात्तदभावस्स्यात्। नित्यत्वात्तन्नैरपेक्ष्ये विभुद्वयसंयोगस्यापि नित्यत्वेन तन्नैरपेक्ष्यान्नित्यसंयोगोऽपि स्वीक्रियताम्। विभूना मिथस्संयोगाभावेन किञ्चिद्बाधकमिति चेन्नित्यज्ञानाभावेऽपि न किञ्चिद्बाधकम्। अस्मदाद्यशक्यकार्यानुत्पत्तिप्रसङ्गरूपबाधकमस्तीति चेन्न। कारणान्तरैरेव

तदुत्पत्त्युपपत्तेः। कर्तृनिरपेक्षकारणान्तरैः कार्योत्पत्तिर्न दृष्टेति चेदन्यत्रादर्शनेऽप्यन्यत्र तथा स्यात। कार्यान्तराणां कारणत्रय-जन्यत्वेऽपि प्रध्वंसस्य निमित्तमात्रजन्यत्वदर्शनात्। तथा च कल्पितस्य ज्ञानादेः कारणनैरपेक्ष्यकल्पनात् सिद्धस्य हेतुवर्गस्य क्वचित्कर्तृनैरपेक्ष्याङ्गीकार उचित। किञ्चान्यत्र ज्ञानं सर्वं सकारणकं तत्प्रामाण्यञ्च गुणजन्यमिति स्थापयद्भिरीश्वरज्ञानं तत्प्रामाण्यञ्च निष्कारणकमिति दृष्टविपरीतं कल्प्यते। अत्र ज्ञानचिकीर्षाव्यधर्म्यन्तरक्लुप्तिमपहाय प्रयत्नमात्रे निरपेक्षं विषयित्वकल्पनमेव युक्तम्।

किञ्च तच्च ज्ञानं प्रत्यक्षकारणाभावान्न प्रत्यक्षम्। लिङ्गाद्यजन्यत्वान्नानुमित्यादिः। स्मृतिकारणाभावान्न स्मृतिः। प्रमाकारणाभावान्न प्रमा। भ्रमकारणाभावान्न भ्रमः। अतो ज्ञानवर्गेषु नान्तर्गत इति तत्त्यागस्सिद्धः। आहुश्चाचार्याः —

श्लो॥ 'नित्या चेश्वरबुद्धिस्ते नानुभूतं न च स्मृतिः।
न च प्रमा भ्रमश्च स्यात् तत्तत्कारणवर्जनात्॥
अनुभूत्यादिहेतूनामभावेऽपि तथा यदि।
स्मृतिहेतोरभावेऽपि स्मृतिरेषा न किं भवेत्'॥ इति।

तत्र यथा किञ्चित् प्रत्यक्षत्वप्रमात्वादि कल्प्यते। तद्वदेव यत्नस्य विषयित्वेऽनैरपेक्ष्यमपि कल्पयितुं युज्यते।

ननु चेतनत्वमेवात्मलक्षणम्। चैतन्याभावे आत्मत्वं न स्यादिति चेन्मैवम्। यत्नवत्वस्यैव तल्लक्षणत्वात्। अस्तु तर्हि यत्नमात्रवानीश्वरस्स एवानुमानेन सिद्धयतीति चेन्न। 'यस्सर्वज्ञस्सर्ववित्। 'तदैक्षत बहुस्यां प्रजायेय।' 'सोऽकामयत बहुस्यां प्रजायेयेत्यादिश्रुतिशतविरोधेन तद्विरुद्धानुमानोदयासम्भवात्। किञ्च जीवनपूर्वकप्रयत्नन्यायेनादृष्टविशेषजनितयत्नवद्भिर्जीवैः क्षित्यादेस्सकर्तृकत्वसम्भवे किं नित्यप्रयत्नतदाधारकल्पनगौरवेण। यादृशैरेवादृष्टैश्शरीरादिनिरपेक्षैस्सह कृत ईश्वरः स्रष्टेति मन्यसे। तादृशैरेव तत्फलभोक्तृष्वेव यत्नक्लुप्तेर्लघुत्वात्। अतो दृष्टवद्भिर्जीवैरेव जगदुत्पत्तिसिद्धिरिति सिद्धिसाधनता दुर्वारा। अतिरिक्तकर्तृकल्पने कर्तुरन्यवस्थाप्रसङ्गश्च।

तथाहि क्षित्यादिकं सकर्तृकं कार्यत्वात् घटादिवदित्यत्र एककर्तृकतया प्रसिद्धे सपक्षे घटे द्विकर्तृकत्वं स्यात्। अनेककर्तृकरथगोपुरादावपि सम्प्रतिपन्नकर्त्रतिरिक्तकर्तृकत्वप्रसङ्गश्च। कल्प्यमानो हि कर्ता न केवलं क्षित्यादिमात्रकर्तृत्वेन कल्प्यते। तत्प्रयत्नस्य परिच्छेदकाभावेन सर्वविषयत्वात्। तेन घटादेर्द्वि कर्तृकत्वमायातम्। ततस्तद्दृष्टान्तेन पक्षस्य द्विकर्तृकत्वमापतेत्। ततस्सपक्षस्य द्विकर्तृकत्वं स्यात्। एवं क्रमेणोपर्युपरि क्लुप्तावनन्तेश्वरापत्त्या द्यावा पृथिवी जनयन् देव एकः न द्वितीयोऽस्तीति व्यवस्था भज्यते। यद्येकेनेश्वरेण विश्वकार्यसिद्धौ

द्वितीयक्लृप्तेर्निष्फलत्वेन गौरवात् तत्परित्याग इति तत्रापि गौरवभयेन एकस्यापि त्याग इति प्रकृष्टाकृष्टैर्जीवैरेव जगदुत्पत्तिसिद्धिरिति सिद्धसाधनतैवानुमानस्य। किञ्च सकर्तृकत्वमित्यत्रोपादानादिसमस्तकारणविषयज्ञानादिमान् कर्तृतया विवक्षितः। उत कतिपयविषयज्ञानादिमान्। उत सामान्यतो वा। पूर्वस्मिन् व्याप्त्यसिद्धिः। न हि कुलालादयो घटादिहेतुभूतमदृष्टेश्वरपरमाण्वादिकं जानन्ति। उत्तरयोः पक्षयोरीश्वरासिद्धिः। द्व्यणुकप्रभूति जगदुपकरणयागादिवेदिभिर्जीवैरेव सिद्धसाधनत्वात्। एतेन द्व्यणुकादिकर्तृत्वमपि जीवस्यैवादृष्टद्वारा घटत इति सिद्धम्।

ननु व्याप्त्या सकर्तृकत्वे सिद्धेऽनन्तरं पक्षधर्मताबलात् नित्यत्वसार्वज्ञ्यादिसिद्धिरिति चेन्मैवम्। व्याप्यदर्शनेन पक्षधर्मतया व्यापकस्य प्रागविदितधर्मिविशेषसम्बन्धमात्रं सिद्ध्यति। न तु सपक्षदृष्टवैजात्यम्। अन्यथा धूमानुमिते वह्नौ तार्णितार्णादिविशयलोपप्रसङ्गात्। सपक्षदृष्टान्यतामात्रमपि नानुमेयनियतम्। पृथिवी द्रव्यं परिशेषानुमानमपि हि क्षित्यादिकं पक्षीकृत्य स्यात्। तत्र किञ्चिज्ज्ञकर्तृकत्वनिषेधो वा स्वतस्सर्वज्ञकर्तृकत्वं वा साध्यते। नाद्यः। तत्सम्भवस्य स्थापितत्वात् न द्वितीयः। तादृशस्य व्याप्त्यसम्भवात्। दृष्टान्तासिद्धिश्च। न च क्षित्यादिकर्तृत्वस्य जीवेष्वसम्भवात् तद्वि—

लक्षणकर्तृसिद्धिरेव परिशेषानुमानसाध्येति वाच्यम्। प्रकृष्टादृष्टवशाद्विचित्रशक्तिमद्भिर्विश्वामित्रादिभिः क्षित्यादिकार्यसम्भवेन तद्विलक्षणकर्तृसिद्धेः।

नन्वेवमपि घटादिकर्तृव्यावृत्तो विशेषः क्षित्यादिकर्तुः स्वीकार्यः। तदुत्पत्त्यासन्नपूर्वकाले अस्मदादिजीवानां तदनुगुणबुद्ध्यादिराहित्यात्। अतो दृष्टविपरीतक्लृप्त्यविशेषे किमीश्वरक्लृप्तिप्रद्वेषेणेति चेन्न। निश्वासादावधीपूर्वकप्रयत्नेनापि कर्तृत्वं त्वयेष्यते। कालविप्रकृष्टधियापि पुरुषस्य कर्तृत्वमाभिचारिकपरपीडादौ लोकवेदसिद्धम्। अत उत्पत्त्यासन्नकाले तादृशबुद्ध्यभावेऽपि विप्रकृष्टकालान्तरीयबुद्ध्या वा अधीपूर्वकप्रवृत्त्या वा कर्तृत्वसिद्धेः न जीवविलक्षणकर्तृसिद्धिः।

अथ कुम्भादिमृदसम्भावितो गोपुरादिकर्तुर्बुद्धिशक्तिप्रकर्षो दृश्यते। एवं मनुष्यासम्भावितशकुन्तलूतादिजन्त्वन्तरेषु च मनुष्येष्वपि विश्वामित्रादिष्वेवं देवासुरसिद्धादिषु पितामहादिपर्यन्तेष्विति स्थिते बुद्धिशक्तितारतम्यस्य क्वचिद्विश्रमो वाच्य इति। एवमीश्वरस्सेत्स्यतीति चेदुच्यते। कर्मभेदाधीनमेव शक्तितारतम्यं त्वया निदर्शितम्। जन्मौषधिमन्त्रतपस्समाधिजाश्च सर्वास्सिद्धयः। तत्तदृष्टेष्वायतन्ते। एवञ्चादृष्टाधीनशक्तिप्रकर्षतारतम्यं कालभेदेन कर्मवश्येष्वेव केषुचित्सम्भवति। अतो विश्व-

मस्थानान्तरकल्पनं युक्तम्।

ननु कारणाभावे कार्याभावः उभयाभ्युपेतः। कारणानि च कर्तुपहितानि कार्यञ्जनयन्ति। कर्त्रभावे कथं व्याप्रियेरन्। अतः कार्यस्य साङ्ख्यसौगतचार्वाकवर्तिन्या नित्यत्वमसत्वमाकस्मिकत्वं वा स्यादिति चेन्न। कारणाभावे कार्यन्न स्यात्। न तु कारणविशेषाभावे। अन्यथा क्वचिद्दृष्टस्य कर्मकारकादेरभावेऽपि क्रियानुत्पत्तिप्रसङ्गात्। दृश्यते हि चिदिक्रियायाः कर्मापेक्षत्वेऽपि भवनध्वंसनादिक्रियायास्तन्निरपेक्षता। अतः कर्तृभावेऽपि कारणान्तरैः कार्यासिद्धेर्निष्प्रत्यूहत्वात्। अथ कालो यथा सर्वकार्यनिमित्तं तथेश्वरोऽपि। तत्परित्यागे समानन्यायेन कालोऽपि त्यज्यतामिति चेन्मैवम्। कालस्य तादृशस्य लोकवेदसिद्धत्वेन तत्परित्यागासम्भवः। तत्तत्कालप्रतीक्षया हि कर्षकाः कृष्यादौ प्रवर्तन्ते। उदिते सूर्ये प्रातर्जुहोति। वसन्तेऽग्नीनादधीतेत्यादिशास्त्रेण हि तत्तत्कर्मणि प्रयतन्ते। तर्ह्यत्रापि द्यावापृथिवी जनयन्देव एक इत्यादिशास्त्रेण कर्तृसिद्धिरिति चेत् सिद्ध्यतु नाम। अलमनुमानस्थापनप्रयत्नेन।

ननु तथापि कारणान्तराणामचेतनानां चेतनाधिष्ठितत्वे प्रवृत्तिर्न स्यात्। वास्यादीनां तक्षणानधिष्ठाने प्रवृत्त्यदर्शनात्। तथाच कर्त्रनुपहितत्वे कारणान्तरैरप्यङ्कुरादिर्न स्यात्। अतः

तत्कर्ताऽवश्यक इति चेन्न। अदृष्टप्रेरितैरेव कारणान्तरैः कार्य-सम्भवेन कर्तृव्यापारापेक्षाभावात्। अदृष्टस्याप्यचेतनस्य चेत-नाधिष्ठानमपेक्षितमिति चेन्न। विषयतासम्बन्धेन कर्तृव्यापार-स्यैव चेतनाधिष्ठितत्वपदार्थत्वेन तत्राप्यचेतनस्य तद्व्यापारस्य चेतनान्तराधिष्ठितत्वापेक्षायामनवस्थापत्तेः।

ननु च कार्यबलात्तत्र व्याप्तेस्सङ्कोचाभ्युपगम इति चेत्तददृष्टेऽपि तुल्यम्। नन्वीश्वरप्रयत्नस्य नित्यत्वात् प्रयत्ना-धिष्ठितत्वमिति चेन्न। नित्यानामपि परमाण्वादीनां तदपेक्षाया-स्त्वयैवोपादितत्वात्। तथाऽप्यन्वयव्यतिरेकवतां कारणानाम-न्यतमस्य त्यागे सर्वहेतुत्यागोऽपिस्यादिति चेन्न। सर्वकार्यानुत्पत्तिप्रस-ङ्गरूपबाधकसद्भावात्। तर्ह्येकस्यापि त्यागो न सम्भवतीति चेत्तदा ध्वंसकार्यन्निरूपय। ध्वंसो हि स्वोत्पत्तौ हेतुमपेक्षमा-णस्समवायिनोरभावात् निमित्तमात्रमपेक्षत इति स्वीकृतः। तथा पक्षेऽपि जीवातिरिक्तस्य कर्तुः कल्पयितुमशक्यत्वात्। कथञ्चि-ज्जीवकर्तृकत्वं कर्तृनिरपेक्षत्वं वा स्वीक्रियताम्। तथा च हेत्वभावे कार्यन्न स्यात्। न तु कार्यत्वसामान्यानपेक्षितहेतु-विशेषाभाव इति कर्त्रभावे कार्यन्न स्यादिति विपक्षे बाधक-तयोक्त न सङ्घटत इति कारणान्तरैरेव ध्वंसादिवत् क्षित्या-दिकार्यसिद्धौ कार्यत्वात् कर्त्रनुमान न सिद्ध्यति। किञ्च क्षित्यादिकं कर्तृजन्यं शरीराद्यजन्यत्वादात्मवदित्यनुमानेन कार्य

त्वहेतोः प्रतिरोधः। न च शरीरेति व्यर्थविशेषणं स्वरूपा- सिद्धिपरिहारत्वेन सार्थस्स्यात्। न च हेतुविशेषणं सर्वमनैका- न्त्यपरिहारायेति शास्त्रमस्ति।

ननु तर्हि व्यर्थविशेषणं सर्वत्रादूषणं स्यादिति चेन्न। यत्किञ्चिद्दोषपरिहारानुपयुक्तस्यैव वैयर्थ्यानुगुणत्वात्। तथा च व्यभिचारावारकत्वेऽपि असिद्धिवारणेन शरीरपदस्य सप्रयो- जनत्वात्। न चाजन्यत्वस्यैवाकर्तृकत्वव्याप्त्या तत्र शरीरपद- निवेशे नीलधूमवद्व्याप्यत्वासिद्ध्यापत्या एकामसिद्धिं परिहरतो द्वितीयासिद्धिरिति वाच्यम्। शरीरजन्यत्वाभावजन्यत्वाभावयो- र्विशिष्टाविशिष्टप्रतियोगित्वयोः प्रतियोगिभेदभिन्नयोस्सामाना- धिकरण्येऽपि शरीरजन्यत्वाभावकेवलजन्यत्वाभावयोर्गुरुलघूधर्म- भूतव्याप्यतावच्छेदकयोरेकत्र समावेशेन धूमत्वधूमप्रागभा- वयोरिव व्याप्यतावच्छेदकत्वे बाधकाभावेन व्याप्य- त्वासिद्ध्यभावात्। एतदुक्तं भवति। स्वसमानाधिकरण- व्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकतया नील- धूमत्वस्य स्वसमानाधिकरणव्याप्यतावच्छेदकधूमत्वघटितत्वान्न नीलधूमत्वं व्याप्यतावच्छेदकं तदवच्छेदेन व्याप्त्यभावात्। नीलधूमो व्याप्यत्वासिद्धः। धूमप्रागभावत्वस्य धूमरूपव्याप्यतावच्छेदकान्तर- घटितत्वेऽपि तस्य स्वसामानाधिकरण्याभावाद्धूमप्रागभावत्वं व्याप्यतावच्छेदकम्। तदवच्छेदेन व्याप्त्या धूमप्रागभावो न व्याप्यत्वासिद्धः। तथा शरीरजन्यत्वस्याजन्यत्वघटितत्वेऽपि तयो-

व्यधिकरणत्वात् शरीराजन्यत्वावच्छेदेनापि व्याप्त्या शरीराजन्यत्वमपि न व्याप्यत्वासिद्धम्। अन्यथा कळमबीजवदिदं कळमाङ्कुरवत्वादित्यनुमानेऽन्वयव्यतिरेकिणि व्यतिरेकव्याप्तौ बीजाभावेन कळामाङ्कुराभावसिद्धौ कळमपदवैयर्थ्यं प्रसज्येत। यदि कालमबीजाभावबीजाभावयोर्विशिष्टाविशिष्टप्रपियोगिकयोः प्रतियोगिभेदभिन्नयोस्सामानाधिकरण्येऽपि तत्तदभावत्वयोर्व्यधिकरणत्वात् स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितत्वात् तदवच्छेदेन व्याप्तिग्रहसम्भवान्न व्याप्यत्वासिद्धिरित्युच्येत। तदा प्रकृतेऽपि तुल्यमिति। एव क्षित्यादिकं सकर्तृकमित्यत्रापि व्यर्थविशेषणं सुलभम्। तथाहि सकर्तृकमित्यत्र कर्तृस्सम्बन्धमात्रं कर्तृव्यापारपूर्वकत्व वा विवक्षितम्। आद्ये सिद्धसाधनत्वम्। सन्ति हि त्वत्पक्षे कुम्भादिकर्तारश्चेतनास्वरूपतस्सर्वत्र विभुतया सम्बद्धा। अस्मत्पक्षेऽपि।

श्लो॥ 'अङ्गुलस्याष्टभागोऽपि न सोऽस्ति द्विजसत्तम।
न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धनाः॥
दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि॥' इति।

सर्वमचेतनं पुण्यपापकर्तृचेतनमिश्रमिति सर्वस्यापि कर्तृसम्बन्धित्वात्। द्वितीये व्यापारपूर्वकत्वनिवृत्तिमात्रेण कार्यत्वनिवृत्त्युपपत्तौ कर्तविशेषणवैयर्थ्यम। व्याप्त्यपयोगाभावेऽपि सिद्ध–

साधनत्वनिवृत्त्यै तदुपादानमिति चेत् तर्हि शरीराजन्यत्वेऽपि असिद्धिपरिहारेण सप्रयोजनत्वादेकामसिद्धि परिहरतो द्वितीया-पत्तिरित्युक्तिर्वितथा स्यात्। किञ्च शरीरजन्यत्वं सकर्तृकत्वा-नुमाने उपाधिः। जन्येषु घटपटादिषु सर्वत्र शरीरजन्यत्व-सत्वात् सकर्तृकत्वव्यापकम्। पक्षे शरीरजन्यत्वाभावात् सा-धनाव्यापकञ्चेति साध्यव्यापकोपाधिनिवृत्त्या पक्षे सकर्तृकत्व-रूपसाध्यनिवृत्तेस्साधनात्। व्यापकाभावस्य व्याप्याभावप्रयोजक-त्वात्। न च जन्यस्यैव साध्यव्यापकत्वेन उपाधौ शरीरपद-वैयर्थ्यमिति वाच्यम्। उपाधेस्साधनाव्यापकत्वसम्प्रतिपत्तये च शरीरपदावश्यकत्वेन सार्थक्यात्। अन्यथाऽयोगोलकं धूमवद्वह्ने-रित्यत्र आर्द्रेन्धनसंयोग उपाधिरित्युच्यते। तत्र इन्धनसयोग-मात्रस्य धूमव्यापकत्वादार्द्रपदवैयर्थ्यं स्यात्। यदि तत्रार्द्रपदा-नुपादानेऽयोगोलकेऽपीन्धनसंयोगसत्वात साधनाव्यापकत्वासम्भवः। एवं पक्षे उपाधिनिवृत्त्या साध्यनिवृत्तिरपि दुश्शका। पक्षे इन्धनसयोगसत्वात। अत आर्द्रपदम्। तददाने त्वयोगोलके आर्द्रेन्धनसंयोगाभावात्। साधनाव्यापकत्वं उपाधिनिवृत्तिश्च पक्षे सिद्धयतीति। एतत्प्रयोजनायैवार्द्रपदमित्युच्येत। तद शरीरपद-मपि तथैवेति तुल्यम्। एव गौरमित्रातनये अय श्याम मि-त्रातनयत्वात् श्याममित्रातनयवदिति साधने शाकाहारपरिणति-जत्वमुपाधिः। तत्र साधनावच्छिन्नसाध्यव्यापकत्वस्य वक्तव्यतया मित्रातनयत्वविशिष्टश्य मत्र्यापकस्याहारपरिणतिजन्यत्वे मत्वात

शाकपदवैयर्थ्यम् । तावन्मात्रोक्तौ पक्षेऽप्याहारपरिणतिजत्वसत्वात् साधनस्यापि व्यापकत्वादुपाधित्वन्न स्यात्। उपाधिनिवृत्त्या साध्यनिवृत्तिश्च न सिद्धयतीति शाकपदम्। तत्प्रवेशे तु पक्षे गौरमित्रातनये शाकाद्याहारपरिणतिजत्वाभावेन साधनाव्यापकत्वोपाधिनिवृत्त्योरस्स म्भवेन तस्योपाधित्वमक्षतम्। तथा प्रकृतेऽपि। अत उक्तानुमानं शरीरजन्यत्वेन सोपाधिकत्वमेव। एवं सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात् । यत्सर्ववित्कर्तृपूर्वकं न भवति न तत्कादाचित्कम्। यथाऽऽत्मादिरित्यादि केवल व्यतिरेकिण्यपि व्यर्थविशेषणत्वमर्थान्तरत्वञ्च सुलभम्। तत्र कर्तृपूर्वकत्वनिवृत्त्यैव कादाचित्कत्वनिवृत्तावुपपन्नायां सर्वविद्विशेषणं व्यर्थम्। सिद्धसाधनत्वनिवृत्त्या सप्रयोजनमिति चेन्न। शरीराजन्यत्वहेतावसिद्धिपरिहाराय शरीरपदमिति वदन्तं प्रति एकामसिद्धिं परिहरतो द्वितीयापत्तिरित्युक्तेरत्रापि दुर्वारत्वात् । तर्हि कर्तृपदं हित्वा सर्ववित्पूर्वकत्वमेव उच्यते। तथाच न वैयर्थ्यमिति चेन्न। वित्पूर्वकत्वनिवृत्त्यैव व्याप्तिसिद्धौ सर्वपदवैयर्थ्यात्। एवं सर्वेति विशेषणेऽपि न सिद्धसाध्यतापरिहारः। सर्वेषां चेतनानां सर्वशब्दार्थवेदिनामसर्ववित्वायोगात्। अन्यथा सर्ववित्साधनस्यापि दुश्शकत्वात्। विशेषतस्सर्वन्न सर्वे जानन्तीति चेन्न। विशेषाणामपि सर्वशब्दार्थत्वात् सर्वसाक्षात्कर्तृपूर्वकत्वं साधयाम इति चेन्न। योगिभिरर्थान्तरत्वापातात्। नित्यसाक्षात्कारि-

पूर्वकत्वं साध्यत इति चेन्न। एवमपिव्याप्तौ नित्यत्वविशेष-णवैयर्थ्यमेव। प्रकारान्तरेण विशेषसाफल्ये शरीराजन्यत्वहेता-वपि साफल्यं सिद्ध्यत्येव। एवं वेदास्सर्वज्ञप्रणीताः वेदत्वा-दित्यत्रापि विशेषणवैयर्थ्यान्तरत्वे बोध्ये प्रणीतत्वनिवृत्तिमात्रेण ज्ञप्रणीतत्वनिवृत्तिमात्रेण वा व्याप्तिग्रहोपपत्तेः। एतेन—

श्लो॥ 'कार्ययोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।
वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्वजिव्ययः'॥ इति

नानाचार्यसङ्ग्रहीतानां सर्वेषामनुमानानां स्थालीपुलाकन्यायेन निरासो बोध्यः।

नन्वस्माकमीश्वरानुमाननिरासेन किं प्रयोजनम्? न च प्रयोजनाभावमात्रम्। अनुमानत एव ईश्वरं प्रतिपद्य तं भज-मानानां नास्तिकत्वशङ्कापादनेन

श्लो॥ 'विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः।
त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः'॥

इति शास्त्रेण महत्पापं स्यादिति चेन्न। अनुमानदूषणेऽप्यागमत-स्तत्सिद्धिमभ्युपगच्छतामीश्वरदूषकत्वाभावात्। अन्यथाऽस्मदादि-प्रत्यक्षवेद्यत्वनिषेधे नानुमानिकेश्वरवादिनोऽपीश्वरदूषकत्वप्रसङ्गात्।

प्रयोजनश्च यथावस्थिततत्त्वावबोधः। ईश्वरानुमाने आभासतां पश्यतां तीव्रबुद्धीनामीश्वराविश्वासपरिहारश्च मन्दमतीनां तीव्रबुद्धिभिः प्रक्षोभाभावश्च। अप्राप्तप्रापकस्यागमस्यानुवादप्रसङ्ग-परिहारश्च। अतः प्रयोजनसद्भावात् पापाभावाच्चानुमाननिरासो युक्तः।

नन्वनुवादत्वेऽपि वेदस्येश्वरसिध्यत्येवेति न कश्चिद्दोष इति चेन्न। निमित्तोपादानभूतेश्वरसिद्धेः। निमित्ततयानुमान-सिध्दमीश्वरमनूद्य श्रुत्या उपादानत्वादिर्विधीयताम्। प्रत्यक्ष-सिध्दं पृथिव्यादिकमनूद्येश्वरशरीरत्वादिविधानवदिति चेन्न। तथैवेश्वरमनुद्य उपादानत्वनिषेधकानुमानोदये तत्र धर्मिग्राहक श्रुतिविरोधस्यैव दुषणत्वावश्यकतया स दुर्वचः। अनुमानस्यैव धर्मिग्राहकत्वात्। उपादानत्वविशिष्टतयागमेनैव सिध्दौ तूपादा-नत्वनिषेधकानुमितौ धर्मिग्राहकविरोधस्य वक्तुं शक्यत्वात्।

नन्वेवमपि प्रत्यक्षशरीरत्वादिनिषेधानुमानात्तदपि दूष्य-तामिति चेन्न। तत्रानुमानसाध्यशरीरत्वनिषेधस्य शरीरत्वग्र-हाधीनत्वात्। तद्ग्रहस्य श्रुत्यतिरिक्तप्रमाणशक्यत्वेन शरीरत्व-श्रुतेरेवोपजीव्यतया तद्विरुद्धानुमानाप्रवृत्तेः। नरशिरःकपालशु-चित्वानुमानवत्। ईश्वरो न पृथिव्याद्युपादानं चेतनत्वात् कर्तृ-त्वाद्वा कुलालवदित्यादिप्रयोगे निषेध्यभूतपृथिव्याद्यपादानत्वस्य

सिद्ध्यसिद्धिभ्यां विरोधस्त्वनुपपन्नः। पृथिव्याद्युपादानत्वस्य प्रत्य-क्षानुमानाभ्यामन्यत्र सिद्धेश्वरनिषेधस्य सुशक्यत्वात्। अतस्त-दनुमानस्य धर्मिग्राहकविरोध एव दूषणत्वेन वक्तव्यः। स चेश्वरस्य शास्त्रैकप्रमाणकत्व एव सम्भवति। किञ्चेश्वरस्य निमित्ततयाऽनुमानसिद्धत्वे तदनुवादेनागमस्योपादानत्वादिविधा-नेऽभ्युपगम्यमाने तस्यानुपादानत्वमेव भवेत्। ईश्वरस्यानुमानि-कत्वात्। ईश्वरस्यानुमानिकत्वात्। अनुमानोपजीव्यजातीयस्यो-पादानत्वनिषेधकानुमानस्य धर्मिग्राहकप्रमाणानुगृहीतस्य यूपादि-त्यैक्यवाक्यस्य प्रत्यक्षविरुद्धत्वेनान्यपरत्ववदन्यपरत्वापातात्। अतोऽ-नुमाननिरासाभावे ब्रह्म जगदुपादानन्न स्यात्। अत एव सूत्र-कारोऽपि 'जन्माद्यस्य यत' इत्यनेन ब्रह्मणोऽभिन्ननिमित्तोपा-दानत्वं प्रतिपाद्य तन्निर्वाहाय तदनन्तरमेव शास्त्रयोनित्वादित्य-नेन ब्रह्मणः प्रमाणान्तरगोचरत्वन्निराचकार इदमत्रावधेयम्। ब्रह्मणोऽनुमानगोचरत्वं प्रतिक्षिप्य शास्त्रैकप्रमाणकत्वे स्थापिते सति शास्त्रमेव धर्मिग्राहकप्रमाणं भवेत्। नत्वनुमानम्। तदैव हि ब्रह्मणो भिन्ननिमित्तोपादानत्व सिद्ध्यति। ब्रह्मणोऽनुमान-वेद्यत्वे तस्य धर्मिग्राहकप्रमाणत्वात् तदविरोधेन ब्रह्म न जग-दुपादानम। जगन्निमित्तत्वादिसाधनेनानुपादानमेव ब्रह्म स्यात्। उपादानत्वबोधकश्रुतिवाक्यन्तु धर्मिग्राहकप्रमाणोपोद्बलितानुमान-सिद्धानुपादानत्वविरुद्धार्थप्रतिपादनासमर्थ सद्यूपादित्यवाक्यवदन्य-परमेव स्यात। अतो ब्रह्मणोऽभिन्ननिमित्तोपादानत्वसिद्ध्यै [illegible]

दानत्वनिषेधकानुमानं दूषणीयम्। दूषणञ्च धर्मिग्राहकप्रमाणविरोध एवान्यथासम्भवात्। स च शास्त्रस्य धर्मिग्राहकत्व एव सम्भवति। अतोऽनुमानगोचरत्वं प्रतिक्षिप्य शास्त्रैकप्रमाणकत्व स्थापितम्। अथ 'यस्य पृथिवी शरीरमित्यादिषु प्रत्यक्षसिद्धपृथिव्याद्यनुवादेन भगवच्छरीरत्वनिषेधानुमाने धर्मिग्राहकप्रमाणविरोधाभावेऽपि तदनुमानदूषणवदुपादानत्वनिषेधकानुमानदूषणसम्भवात् ईश्वरानुमाननिषेधपूर्वकशास्त्रैकप्रमाणकत्वसमर्थनफलमिति चेदुच्यते। भगवच्छरीरत्वस्य शास्त्रव्यतिरिक्तप्रमाणगोचरत्वाच्छरीरत्वसिद्धिमुपजीव्य शरीरत्वनिषेधकानुमानस्यनिषेध्यसिध्यसिद्धिभ्यां व्याघातेन निषेधो न सिध्यतीति अप्रसिद्धसाध्यकत्वदूषणदूष्यत्वं तदनुमाने सम्भाव्यते। उपादानत्वनिषेधकानुमाने तु निषेध्यजगदुपादानत्वस्य परमाणुत्र्यणुककलापतन्त्वादिषु प्रसिद्धस्येश्वरनिषेधे सिद्ध्यसिद्धिव्याघातप्रसक्त्या तादृशानुमानप्रवृत्तौ ब्रह्मण उपादानत्वन्न सिद्ध्येत्। अतो धर्मिग्राहकप्रमाणविरोधेन तस्य वह्न्यनुष्णत्वानुमानवत् बाधितत्वसम्पत्तये शास्त्रैकवेद्यत्वं समर्थितमिति।

शास्त्रयोनिरचनानुपपत्त्यधिकरणविरोधपरिहारः —

ननु तथापि शास्त्रायोन्यधिकरणंनानुमानस्येश्वरसाधकत्वमुक्तम्। रचनानुपपत्तेश्चेत्यधिकरणेऽचेतनानां चेतनाधिष्ठितत्व

मावश्यकमिति व्याप्त्या चेतनविशेषत्वेनेश्वरस्साधितः। अतस्त-योर्विरोध इति चेदुच्यते। शास्त्रयोन्यधिकरणे ईश्वरो नानु-मानेन साधयितुं शक्यते इत्युक्तम्। रचनानुपपत्तेरित्यधिकरणे स एव नानुमानेन बाधितुं शक्य इत्युक्तम्। अतो द्वयोर-प्यधिकरणयोः परस्परं न विरोधः। एतदुक्तं भवति। यद्वस्तु येन प्रमाणेन साधयितुं योग्यं तदेव वस्तु तेन प्रमाणेन बाध-यितुं शक्यते। यथा प्रत्यक्षसिद्धो घटादिस्तनैव प्रत्यक्षेण बाध्यते। न पुनः प्रत्यक्षाविषयः परमाण्वदृष्टादिः। प्रत्यक्षेण बाध्यते। एवमनुमानगोचरत्वादीश्वरस्तेनैवानुमानेन साधयितुं बा-धयितुं न शक्यत इति सूत्रकाराभिप्रायः इति।

अथ निमित्तोपादानयो लक्षणविरोधान्निमित्तोपादानैक्ये वाक्यस्य धूपादित्यैक्यवाक्यवद्यथाश्रुतार्थबोधकत्वाभावेन ब्रह्मणोऽ-नुपादानत्वमिति चेन्मैवम्। न ह्युपादानासमवायिव्यतिरिक्तं निमित्तमिति निमित्तलक्षणम्। नापि निमित्तासमवायिभिन्न-मुपादानमिति तल्लक्षणम्। येन विरोधस्स्यात्। किन्तूपादानत्वं परिणामाश्रयत्वम्। परिणामः आगन्तुकावस्थाविशेषः। विशे-षस्तूत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया तदनुगुणनियतपूर्वभाव्य वस्थाविशिष्टं तदेव वस्तूपादानम्। यथा घटत्वावस्थाविशिष्ट-मृद्द्रव्यापेक्षया पिण्डत्वावस्थाविशिष्टं तदेव मृद्द्रव्यं परिणामस्यौ-न्मुख्यातिरिक्ताकारविशिष्टं कारणन्निमित्तम्। असमवायीति

कारणान्तरविभाग अनुपपन्नः। तस्य पारिभाषिकत्वात्। अन्यथा निमित्तकारणप्रत्यासन्नं कारणनिमित्तकारणमिति चतुर्थमपि पारिभाषिकलक्षणं स्यात्। ततश्च लक्षणविरोधाभावान्निमितोपादानैक्यवाक्यं यथाश्रुतार्थकमेव। तथा चाविभक्तनामनामरूपचिदचिच्छरीरकत्वापेक्षयोपादानत्वसिद्धेः। अविभक्तचिदचिच्छरीरकत्वातिरिक्तेन कुलालादिसाधारणसङ्कल्पविशेषवत्वाद्याकारेण निमित्तत्वसिद्धेश्च। ईश्वरस्यैव चिदचिद्विषये कर्तृत्वमुपादानत्वञ्च परैरपि स्वीकार्यम्। सन्निहितसयोगादयो घटादिभिरीश्वरस्य। ततश्चेश्वरस्तेषां रागवायित्वात् सर्वकार्यकर्तृत्वाच्च उपादाननिमित्तञ्च। तत्कर्तृकत्वाभ्युपगमे कार्यत्वात्सकर्तृकमित्यनुमानं दशमदशापन्नं स्यात्। चेतनेष्वपि बुद्धिपूर्वकस्वज्ञानसुखाद्युत्पादेन निमित्तोपादानत्वसमुच्चयस्सिद्धः। ज्ञानसुखादिकं प्रति तेषां समवायित्वात्। तदनुकूलकृतिमत्वेन तन्निमित्तत्वाच्च। अतस्सिद्धं सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मैव स्थूलचिदचिच्छरीरकतया परिणमतीति वेदान्ताः प्रतिपादयन्तीति। तेन च तद्व्यतिरिक्तस्य च निखिलस्य जगत आधाराधेयभावेशेशितव्यभावशेषशेषिभावशरीरशरीरिभावकार्यकारणभावादयो यथा प्रमाण सम्बन्धाः स्वीकार्याः।

लक्ष्मीतत्वशोधनम् :—

अत्र जगत नारायण इव लक्ष्मीरपीश्वरी। ईशानो

भूतभव्यस्येतिवत्। ईश्वरीं सर्वभूतानाम्'। 'अस्येशाना जगतो विष्णुपत्नीति लक्ष्म्यामपीशानशब्दश्रवणात्। यद्यपीश्वरस्य पत्नी-श्वरीति पुंयोगादाख्यायामिति ङीषि पत्न्यामीश्वरत्वं न सिद्ध्यति। तथापि सर्वभूतानामिति षष्ठ्यर्थान्वयदौर्बल्यप्रसङ्गेन तथा विव-क्षाऽनुपपन्ना। अस्येशाना जगत इति वाक्यान्तरेण लक्ष्म्या एव साक्षादीश्वरत्वस्य प्रतिपादनात्। तदैकार्थ्येन ईश्वरीमि-त्यत्रापि पुंयोगविवक्षाया अयुक्तत्वात्। अत एव जीवकोटौ तस्या न प्रवेशः।

श्लो॥ 'यथा सर्वगतो विष्णुस्तथैवेय द्विजोत्तम।
आक्रम्य सर्वास्तु यथा त्रिलोकीं
तिष्ठत्ययं देववरो सिताक्षी।

तथा स्थिता त्वं वरदे तथाऽपीत्यादिना तस्यापि तत्तुल्यव्यापित्वबोधनात्। न चेश्वरद्वित्वाङ्गीकारे जगतो द्वैरा-ज्यप्रसङ्ग इति वाच्यम। अत्यन्तसामरस्येन द्वैराज्याप्रसक्तेः। एवं शेषित्वशरण्यत्वप्राप्यत्वादिकमपि अस्याः प्रमाणप्रतिपन्नं स्वीकार्यम्। शेषित्वे प्रमाणम्।

श्लो॥ अस्या मम च शेष हि विभूतिरुभयात्मिका।
अकारणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः॥

उध्दृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा।
मकारस्तु तयोर्दास इति प्रणवलक्षणम्॥ इति शरण्यत्वे
प्रमाणम्।

श्लो॥ लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया।
रक्षकस्सर्वसिद्धान्ते वेदान्तेषु च गीयते॥
वाचः पारं प्रार्थयिता प्रपद्येन्नियताश्रियम्।
संसारार्णवतारिणी
आत्मा विद्या च देवित्वं विमुक्तिफलदायिनी।
यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम्॥
निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः।
शृणोति निखिलान् दोषान् इत्यादिकम्।

प्राप्यत्वे—

श्लो॥ वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैस्सह॥ इत्यादिकम्।

अतो लक्ष्म्याश्शरण्यत्वादिसामान्यत्वेऽपि पुरुषकारत्वन्त्वधिकम्। ननु पुरुषकारस्य साक्षादुपायत्वन्न दृष्टमिति चेन्न। साधारणधनत्यागेऽन्यतरस्यानुमतौ अन्यतरेण वल्लभेनानुमतोऽप्यनुकूलीक्रियते। ततस्ताभ्यां दीयते। तत्र पुरुषकारत्वसाक्षादुपायत्वयोर्दर्शनात्। ननु

श्लो॥ हरिरेकस्सदा ध्येयः

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।

इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥

ऋते तमेकं पुरुषं

न सम्पदां समाहारे विपदां विनिवर्तने।

समर्थो दृश्यते कश्चित्तं विना पुरुषोत्तमम् ॥

इत्यादिभिरेकस्यैव ध्येयत्वमोक्षप्रदत्वादिबोधनाल्लक्ष्म्या अ साक्षदुपायत्वस्वीकारे विरोध इति चेन्न।

श्लो॥ श्रुणूपायं चतुर्थं मे सर्वत्यागसमाह्वयम।

सर्वधर्मान् परित्यज्य सर्वानुच्चावचाङ्गकान् ॥

संसारानलसन्तप्तः मामेकं शरणं व्रज ॥

मां प्रपद्येतैव गतिं

ईशं वा पुरुषोत्तममं

इत्यादिनोभयोरुपायत्वे उपायद्वित्वपरिहाराग गर्वेणा प्रमाण विशिष्टोपायता परत्वमेवाश्रयणीयमिति न विरोधः। उभय प्येकशब्दः विशिष्टव्यतिरिक्तनिषेधपर इति स्फोरयति।

श्लो॥ लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।

रक्षकस्सर्वसिद्धान्ते वेदान्तेप च गीयते ॥

इति प्रमाणम्। अत एव कारणवाक्ये उपासनवाक्ये च सर्वत्र लक्ष्म्या अनुक्तिमाशङ्क्य तदन्तर्भावात्वान्न पृथगभिधत्ते श्रुतिरपीति भट्टपराशरपादैस्समाहितम्। किं बहुना। ' अकारेणोच्यते विष्णुरिति कठश्रुत्या तथापि साधारणमीशितृत्व श्रीश्रीशयोर्द्वा च सदैकशेषीत्युपबृंहितया प्रतिपादितम्। शेषित्वं उभयाधिष्ठानञ्चैक शेषित्वमिति श्रीराममिश्रैर्विवृतम्। अतो जगच्छेषित्वाल्लक्ष्म्या अपीश्वरत्व सुस्फष्टमिति। भगवद्यामुनाचार्यैश्च लोकैकेश्वरीत्यनेन सर्वलोकेश्वरत्वं, यस्यास्ते महिमानमित्यनेनापरिच्छिन्नमहिमत्व, कान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणामित्यनेन मोक्षप्रदत्वञ्च सम्यगुपपादितम्। श्रीभट्टपराशरपादैश्च लक्ष्मीकल्याणग्रन्थे—

श्लो।। 'अनन्याधीनकल्याणमन्यमङ्गलकारणम्।
जगन्निदानमद्वन्द्वं द्वन्द्व वन्दामहे महः।'

इति च श्लोकेऽन्यमङ्गलकारणमित्यनेनात्यन्तसामरस्यञ्चाभिहितम्। एवं स्वयं वस्तूकुर्वञ्जननि मम करगात् सरसिजप्रकारौ पद्मायास्तव च चरणौ नश्शरणमन्निति श्लोके द्वयार्थविवरणभूते भगवता सम लक्ष्म्या अपि साक्षादुपायत्वं स्पष्टमभिहितम्। एतेन द्वये पूर्वखण्डे श्रीमच्छब्दे श्रिय उपलक्षणत्वं विशेषणत्वं वा। अथापि श्रिया नोपायत्वमिति कैश्चिदुक्तं

प्रत्युक्तम् ।

एवं श्रीगुणरत्नकोशे च लक्ष्म्या भगवतश्च जगदी श्वरत्वमुभयविभूतिमत्वं प्राप्यत्वमुपायत्वादिकं साधारणम् । असा धारणं लक्ष्म्याः पुरुषकारत्वं प्रत्युत देवतान्तरव्यावर्तकत्वम- ङ्गलावहत्वपरब्रह्मत्वापादकत्वादिकञ्चेति स्पष्टमभिहितम् । तथ देविश्रुतिमित्यनेन श्रुत्यैकसमधिगम्यकल्याणगुणवत्त्वमाहुर्वेदेत्यने यथावस्थिततत्त्वज्ञानहेतुकटाक्षवत्वम् । 'अस्येशाना जगत इत्यने सर्वेश्वरत्वम् । तच्चत्वत्कपतिमित्यनेन पत्युर्देवतान्तरव्य वर्तकत्वम् । उद्वाहुस्त्वामित्यनेन सर्वोपनिषत्प्रतिपाद्यसर्वजगन्निय न्तृत्वम् । इदं सदसदात्मेत्यनेन निम्नोन्नतजगत्सृष्टिहेतुकटाक्षवत्व हेलायामित्यनेन उभयविभूतिमत्व ते साध्येत्यनेन शेषशेषाश- नादिनित्यसूरिपरिचरणयोग्यत्व यद्दूर इत्यादिभि. कृत्स्नभो- गविभूतिनियन्तृत्व स्वरूपं स्वातन्त्र्यमित्यनेन निखिलवेदवेद्यत्व तव स्पर्शादित्यनेन पत्युर्मङ्गलावहत्व अपाङ्गेत्यनेन पत्युः पर ब्रह्मत्वहेतुकटाक्षवत्वं स्वतः श्रीस्त्वमित्यनेन पत्युः स्वायत्ताति शयत्वेऽपि अनन्याहितत्वं प्रशकनेत्यनेन भगवच्छब्देमुख्यप्रत्यौ पयिकपूर्णषाड्गुण्यवत्व प्रणतवरणेत्यनेन मोक्षयिष्यामीति सङ्क ल्पाश्रयत्वरूपमुपायत्वं क्षेप करत्वेत्यनेन मोक्षप्रदत्व युवत्वादा वित्यनेन ऐच्छिकस्तोत्वासाधारणगुणवत्वं यदि गतुजेत्यनेना- वताराविसर्वव्यापारेऽप्यैकरस्य मातर्मैथिलीत्यनेन साक्षाद्रक्षकत्व

पितेवेत्यनेन पुरुषकारत्वं नेतुतित्यनेन पत्या तुल्यं निरङ्कुशैश्वर्य औदार्येत्यनेनौदार्यादिगुणगणवत्वमैश्वर्येत्यनेनैश्वर्यादिवन्मोक्षप्रदत्वं ज्ञानक्रियेत्यनेन सर्वलोकभरत्वञ्च स्पष्टमुपपादितम्। न च स्तोत्रादौ श्रियन्त्वत्तोऽप्युच्चैरिति भगवतोऽप्युच्चैस्त्वेन स्तौमिति प्रतिज्ञानात्। स्तुतेरारोपितगुणकथनरूपत्वादस्येशानेत्याद्युक्तेश्वरत्वादिकं सर्वमारोपितं न वास्तविकमिति वाच्यम्। तत्त्वेन यस्य महिमार्णवशीकराणूरित्युपक्रम्य कवये निरपत्रपाय गुणकथनेन हि स्तुतित्व गुणानामसद्भावे स्तुतित्वमेव हीयेत। न ह्यसता गुणेन कथितेन परोचना जायते। अतः कर्म प्ररोचयन्तो गुणसद्भाव बोधयन्त्येवार्थवादा इति कथमसता गुणेन कथितेन रुचिर्भवति।

श्लो॥ 'स्तोत्रन्नाम किमामनन्ति कवयो यद्यन्यदीयान् गुणा-
नन्यत्र त्वसतोऽधिरोप्य फणितिस्सा तर्हि वन्ध्या त्वयि।'

इत्याचार्यसूक्तिभिः विद्यमानगुणकथनस्यैव स्तुतित्वात्। एतद्ग्रन्थे च 'स्तोतुं के वयमित्यदश्च जगृहुः प्राञ्चो विरिञ्चादय' इत्यारभ्य 'स्तोतारं तमुशन्ति देवि कवयो योऽविरतृणीते गुणान्' इति विद्यमानगुणविस्तारकथन स्तुतिरित्युक्तेश्च। न हि चतुर्मुखादीनामारोपितगुणकथनाशक्तिः। न च सर्वकल्याणगणाकरे भगवत्यसम्भाविता गुणा [illegible]

पितगुणकथनं स्तुतिरित्यसङ्गतमेव। तर्हि श्रियः भगवतोऽप्यु-
च्चैस्त्वकथनं वास्तविकं कथमिति चेदुच्यते। अनाद्याज्ञाति-
लङ्घनापराधेन भगवद्विमुखानामाश्रितानामदृश्यत्वधूननाभिगम्यत्व-
सम्पादनेन पुरुषकारत्वं देवतान्तरव्यावर्तकत्वं पत्युर्मङ्गलावह-
त्वपरत्वौपयिककटाक्षवत्वमित्यादीनां वास्तविकानां सद्भावा-
दुच्चैस्त्वकथनं उपपन्नम्। न तत्समश्चेत्यादेरपि लक्ष्मीविशिष्ट
भगवत एव निस्समाभ्यधिकत्वप्रतिपादनेन विरोधाभावात्।
अतो लक्ष्म्या अपि शरण्यत्वेश्वरत्वप्राप्यत्वादिकं प्रमाणैराचा-
र्यसूक्तिभिश्चाभ्युपगन्तव्यमिति सिद्धम्।

इतीश्वरपरिच्छेदः

श्रीः

श्रीमते लक्ष्मीनृसिहपरब्रह्मणे नम.

# अथ नित्यविभूतिपरिच्छेदः

ईश्वरनिरूपणानन्तरं तस्य नित्यविभूतिर्निरूप्यते। त्रिगुण-द्रव्यव्यतिरिक्तत्वे सति सत्त्ववत्त्व तमोरहितत्वे सति सत्त्ववत्वं स्वयं प्रकाशत्वे सति सत्त्ववत्वमित्यादि तल्लक्षणम्। उक्तलक्षणेषु जीवेश्वरयोरतिव्याप्तिवारणाय विशेष्यदलम्। त्रिगुणेति व्याप्तिवारणाय विशेषणदलम्। एव चेतनतद्धर्मभूतज्ञानान्यत्वे सति स्वप्रकाशकत्वमपि तल्लक्षणं त्रिगुणेति व्याप्तिवारणाय विशेष्यदलम्। शेषं स्पष्टम्। आदित्यवर्णन्तमसः परस्तात्, ते ह नाकं महिमानस्सचन्ते। यत्र पूर्वे साध्यास्सन्ति देवाः, क्षयं तमस्यरजसः पराके, यो अस्याध्यक्षः परमे व्योमन्, सहस्रस्थूणे विमिते दृढ उग्रे। यत्र देवानामधि देव आस्ते।

हिरण्मये परमे लोके विराजं ब्रह्म निष्कलम्।
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्॥

स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुन-

रावर्तते न च पुनरावर्तते। तदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्।

श्लो॥ रम्याणि कामचाराणि विमानानि सभास्तथा।
आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः॥
एतैव निरयास्तात स्थानस्य परमात्मनः।
दिव्यं स्थानमजरञ्चाप्रमेयं दुर्विज्ञेयञ्चागमैर्गम्यमाद्यम्।
गच्छ प्रभो रक्ष चास्मान् प्रपन्नान् कल्पे कल्पे जायमानः स्वत्मूर्या॥
देवा हि यं न पश्यन्ति दिव्यं तेजोमयं पदम्।
अत्यर्कानलदीप्त तत् विष्णोर्महात्मनः॥
स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः

इत्यादिश्रुतिस्मृतिभिस्तत्सिद्धिः। सा च विभूतिरध.प्रदेशेव च्छिन्ना। ऊर्द्धप्रदेशानवच्छिन्ना च। आनन्त्यतम परत्वयोः श्रुतयोरवर्जनीयत्वात्। आनन्त्यमात्रसाम्येऽप्यनन्तत्रिगुणादपीयमधिकतरा। 'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि' इति श्रुत्या न्यूनाधिकभावप्रतिपादनात्। अनन्तत्वेऽपि यथा द्रव्यपृथिवीघटादीनां सवत्सरमासपक्षदिनलवादीनाञ्च न्यूनाधिकभावः। तथा देशेऽप्यादित्यादूर्ध्वमपि गगनदेशोऽनन्तो भूमण्डलादनन्तरः। पातालादनन्ततम इति न्यूनाधिकभावदर्शनात्। यद्यपि पादोऽ-

स्येत्यनेन तत्स्थवस्तूनामेव न्यूनाधिकभावः प्रतीयते। तथापि तेषां न्यूनाधिकभावे तदधिकरणदेशन्यूनाधिकभावोऽर्थसिद्धो भवति। स च समचतुर्भागाभिप्राय बुद्ध्यर्थः पादवदित्युक्तत्वात् अचेतनोऽयं जीवेश्वरकोटिविलक्षणत्वात्। अथापि स्वयं प्रकाशा।

श्लो॥ तत्रानन्दमयो भोगा लोकाश्चानन्दलक्षणाः।
आनन्दन्नाम तल्लोकं परमानन्दलक्षणम्॥
तयोर्ना परमव्योमन् निर्द्वन्द्व सुखमुत्तमम्।
षाड्गुण्यः प्र रो नित्य. स्वाच्छन्द्याद्देशनां गतः॥

इत्यादिप्रमाणबलात्। तथा किमात्मकैषा भगवतो व्यक्तिरिति प्रश्ने यदात्मको भगवानिति सामान्यत उत्तरे कृते पुनः किमा-त्मको भगवानिति प्रश्ने ज्ञानात्मक इत्युत्तरमुक्तम्। श्रुतौ व्य-क्तिश्शरीरमित्यर्थः। अतो दिव्यमङ्गलविग्रहस्य ज्ञानात्मकत्वात्। तत् द्रव्यात्मिकायास्सर्वस्यानित्यविभूतेर्ज्ञानात्मकत्वमुचितम्। ज्ञा-नात्मकत्वमत्र स्वय प्रकाशत्वमेव। तच्च स्वगोचरज्ञाननिरपे-क्षप्रकाशाश्रयत्वं तदेव ज्ञानपदप्रवृत्तिनिगित्तम्। तेन निमित्तेना-त्मनीव नित्यविभूतावपि ज्ञानपद मुख्यमेव। ज्ञानत्वेऽप्यात्म-वदस्या निर्विपयकत्वाकर्तृकत्वे युक्ते परस्मै भासमानत्वाच्च धर्मभूतज्ञानवत् पराकत्वम्। ननु नित्यविभूतेः स्वयं प्रकाशत्वे संसारिणां शास्त्रनिरपेक्षं तत्प्रकाशप्रसङ्ग इति चेन्न। सर्वा-

त्मनां स्वरूपस्य स्वयं प्रकाशत्वेऽपि निखिलधर्मभूतज्ञानाना-मपि स्वयं प्रकाशत्वे चात्मस्वरूपं स्वस्मै स्वयं प्रकाशते। नान्यस्मै। धर्मभूतज्ञानमपि स्वाश्रयायैव प्रकाशते। नान्यस्मै प्रकाशत इतिवन्नित्यविभूतिरपि नित्यमुक्तेश्वरेभ्यः प्रकाशते। न संसारिणामिति नियमे बाधकाभावात्। अथ स्वगोचरज्ञान-विगमदशायां प्रकाशमानत्वं यस्य तदेव तस्य स्वयंप्रकाशत्वम्। यथा सुषुप्तावात्मगोचरज्ञानाभावेऽप्यहमहमिति धर्मिस्फुरणादा-त्मनः स्वयं प्रकाशत्वम्। तथा नित्यविभूतेः स्वयंप्रकाशत्वं वक्तव्यम्। तच्च न सम्भवति। बद्धान् प्रति नित्यविभूतेः स्वयमप्रकाशात्। नित्यमुक्तेश्वराणां निरङ्कुशसर्वसाक्षात्कार-वतां तद्गोचरज्ञानविरहासम्भवात्। न तान् प्रत्यपि स्वयं-प्रकाशत्वम्। अतस्तस्याः कथं स्वय प्रकाशत्वमिति चेदुच्यते। न तावत स्वगोचरज्ञानविगमदशायां प्रकाशमानत्व स्वयंप्रकाश-त्वम्। तथा सति दिव्यात्मस्वरूपस्य दिव्यमङ्गलविग्रहस्य नि-त्याना स्वरूपस्य च स्वय प्रकाशत्वन्न स्यात्। तत्रापि बद्धानां तदप्रकाशात्। नित्येश्वराणां तद्गोचरज्ञानविगमाभावात्। किन्तु स्वगोचरज्ञानतत्त्वनिरपेक्षप्रकाशमानत्वमित्युक्तम्। तच्च दिव्या-त्मस्वरूपादौ वर्तते। तन्नित्यविभूतावपि तुल्यम्।

ननु तथापि बद्धान् प्रति यदा कदाचिदपि वा नित्य-विभूतिः कुतो न प्रकाशत इति चेन्न। विषयप्रकाशनविर-

हकाले धर्मभूतज्ञानवृत्तिस्वयंप्रकाशनशक्तेः प्रतिबन्धवद्बद्धदशाया-न्नित्यविभूतिवृत्तिस्वयप्रकाशत्वशक्ते. प्रतिबन्धात् । अतो बन्ध रहितानां मतिविभावे सत्यप्येषान्निरपेक्षात्मस्वरूपवत् स्वयंप्र-काशत इति सिद्धम्। नित्यविभूतेर्निरतिरतिशयदीप्तियोगात् स्वयं प्रकाशत्ववादः ज्ञानावारकत्वाभावादेश्च ज्ञानत्वव्यपदेशः। अत्यन्तानुकूलरूपरसगन्धादियोगानन्दसुखादिव्यपदेश इति केषा-ञ्चित्कल्पनम्। पूर्वोक्तभगवच्छास्त्रवचनार्थस्वारस्यानभिज्ञताकृत-मिति तन्न श्रद्धेयमिति प्रामाणिका आहुः। किञ्च जीवेश्वरा-दिष्वपि स्वयंप्रकाशज्ञानादिव्यपदेशानामुक्तरीत्या गौणत्वसम्भवेन तत्रापि ज्ञानादिशब्दानाममुख्यत्वमिति कल्पयितुं शक्यत्वाच्च। अतः पूर्वोक्त एव प्रामाणिकार्थ इति वक्तव्यम्।

नन्वय प्रकाशस्वविषयबुद्धिधर्मो वा उत धर्मो वा। पूर्वत्र स्व-प्रकाशत्वहानिः। उत्तरत्रानादिरागन्तुको वा। आद्ये बद्धान् प्रत्यपि भानप्रसङ्गः। द्वितीये कारणानिरूपणादसम्भव इति चेन्मैवम्। न ह्यागन्तुकानां सर्वेषां विशेषकारणमस्माभिर्विविच्यते। न चास्मदविवेचितत्वे कारण नास्तीति वक्तुं शक्यम्। विद्युदादेराक-स्मिकत्वप्रसङ्गात्। सामान्यकारणन्तु विश्वकर्तृरिच्छादिकं श्रुतमेव। अत एव हि नित्यानां मुक्तानाञ्च स्वच्छन्दचिकीर्षासन्ततिभेदसिद्धि रिति। इयञ्च पञ्चोपनिषत्प्रतिपाद्यपञ्चभूतेन्द्रियमयी नित्यमुक्ते

श्वराणामिच्छानुरूपशरीरेन्द्रियप्राणविषयरूपेणावतिष्ठते। त्रिगुणवदियमपि। चतुर्विंशतितत्त्वात्मिकेति केचित्। तथापि न तत्त्वानां प्रकृतिविकृतिभावः। दिव्यमङ्गलविग्रहादे नित्यत्वश्रवणादप्राकृतानामपि महदादीनां सद्भाव आकाशादिवत्। न ह्याकाशाद्युपादानका वाय्वादयः। तत्र च शरीरादीनां संस्थानानि प्रायशः प्राकृततुल्यानि। शुभाश्रयाणां शरीरादीनां पुण्यादिमत्वश्रवणात्। तत्रेन्द्रियसद्भावसिद्धिः। चक्षुरादिशब्दानाञ्च प्रयुक्तानां गोलकादावमुख्यत्वात्।

श्लो॥ 'इन्द्रयच्छिद्रविधुरा द्योतमानाश्च सर्वशः'

इत्यादिवचनमुत्सर्गापवादनयेन कर्मकृतेन्द्रियप्रतिक्षेपपरम्। अशरीरं वा वसन्तमित्यादौ कर्मकृतशरीरादिप्रतिषेधवदभावं बादरिरित्यधिकरणे मुक्तस्य देहेन्द्रियाणि सन्तीति चिन्तितत्वात् भूतेन्द्रियतत्फलसद्भावो भाष्यकारैरेव सूचितः। भट्टपराशरपादैरीश्वरादीनां मनस्सद्भावोऽपि दर्शितः।

मनसैतान् कामान् पश्यन् रमते, मनसोऽस्य दिव्यं चक्षुः, सोऽन्यं कामं मनसा ध्यायीत, मनसैव जगत्सृष्टम्। एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चेत्येवमादिप्रमाणात्। विषयाश्चास्त्रभूषणायायुधासनपरिवाराय तनोद्यानवापीकूपतटाकक्रीडापर्वतादयोऽतिविचित्रा नित्याः। केचन कृतकाः पदार्थाः

ञ्चन नित्याश्च सन्ति हि। तत्रापि तरुषु पल्लवकुसुमफला-
यः परिणामाः। नदीषु फेनतरङ्गबुद्बुदादयः विग्रहे च व्यूह-
त्रभवादयः। कालकृतपरिणाममात्रं हि तेषु निषेध्यम्। न तु
ागवत्सङ्कल्पमात्रकृतमपि। एवं शरीराण्यपि कानिचिन्नित्या-
ामीश्वरस्य च नित्येच्छापरिग्रहान्नित्यानि। कानिचिदनित्ये-
च्छापरिग्रहादनित्यानि। मुक्तानां तु कृतकान्येव। ते हि कदा-
चिदशरीराः कदाचित्सशरीरा इति भाष्ये प्रदर्शितम्। इन्द्रि-
ाणि तत्रत्यानि सर्वाण्यपि नित्यानि। तत्रत्यव्योमादिवत् उपा-
ाननिरपेक्षत्वात्। कानिचिन्नित्यैरीश्वरेण च परिगृहीतानि।
ानिचित्कदाचित्परिगृहीतानि। मुक्तैस्तत्परिग्रहः कादाचित्क
ेव। शरीरवन्नित्यमुक्तानां शरीरादिपरिग्रहो भगवदभिमत-
ैङ्कर्यरूपभोगाय। भगवतोऽपि तत्परिग्रहस्स्वभोगाय स्वशेषभूत-
नित्यमुक्तानन्दाय मुमुक्षूपास्यत्वसिद्ध्यै च। स च परिग्रहः
ागवतः स्वसङ्कल्पादेव। नित्यमुक्तानां तु कदाचित्परमपुरुष
ाङ्कल्पात् कदाचित्परमपुरुषसङ्कल्पानुविधायिस्वसङ्कल्पाच्च।

ननु नित्यस्यैकस्यैव ज्ञानस्य संसारदशायां कर्मणा
ाङ्कोचविकासभेदात् सुखदुःखेच्छाद्वेषादिरूपावस्थाभेद उपपन्नः।
त्रिपाकदशापन्नजीवकर्मसहकारि तारतम्यात् ईश्वरस्य विषमत्रि-
ुणपरिणामहेतुसङ्कल्पास्सन्तु नाम। अप्राकृतविचित्रदेहादिपरि-
ग्रामेषु कर्मकालाद्युपाधिविधुराणां सङ्कोचविकासरहितसमस्त-

वस्तुगोचरज्ञानानां नित्यमुक्तेश्वराणां कथं कादाचित्केच्छासङ्कल्पतत्कृतानन्दादिज्ञानावस्थाविशेषा घटन्ते। उच्यते सर्वज्ञसंविदः कर्माद्युपाध्यभावेऽपि क्रमश ऐच्छिकोल्लेखभेदास्सन्त्येव। अन्यथा भूतकार्येषु भूतत्वस्य वर्तमानकार्येषु वर्तमानत्वस्य भविष्यत्कार्येषु भविष्यत्वस्य चाग्रहणे भ्रान्तित्वप्रसङ्गात्। अत आगन्तुकोल्लेख भेदास्सर्वज्ञसंविदि ऐच्छिका आवश्यका। एवं मुक्तानां नित्यानामपीच्छासङ्कल्पभोगादिरपीश्वरेच्छाविशेषात् भवति। तथाऽप्राकृतविचित्रार्थसिसृक्षाऽपि प्रवाहानादित्वादुपपन्ना। इच्छासङ्कल्पसृष्टयादयश्चोत्तरोत्तर भोगाय ऐच्छिकाः प्रवर्तन्ते। अतस्सिद्धं नित्यानित्यभेदादीश्वरादेर्नित्यानित्यशरीरादिमत्वम्। ईश्वरशरीरे च सूक्ष्मव्यूहविभवादिभेदाः श्रीमत्पाञ्चरात्रादिभिः प्रपञ्चिता अवगन्तव्याः। सङ्ग्रहस्तु सूक्ष्मं केवलं षाड्गुण्यं विग्रहं वासुदेवाख्यं परब्रह्म पूर्वोक्तम्। परस्मिन्नेव शान्तोदितनित्योदितविभागोऽपि भाव्यः।

'नित्योदितात्सम्बभूव तथा शान्तोदिता हरिः'

इत्युक्तप्रकारेण मुक्तानुभाव्यनित्योदितसंज्ञकपरवासुदेवोत्पन्नश्शान्तोदितसंज्ञकः व्यूहत्रयहेतुभूतो वासुदेवः। तेन चतुर्व्यूहत्रिव्यूहपक्षावपि न विरुद्धौ परवासुदेवव्यूहवासुदेवयोरभेदे त्रिव्यूहः। भेदाश्रयणेन शान्तोदितवासुदेवस्य व्यूहघटने चतुर्व्यूहः। अयं पक्षः।

श्लो॥ 'गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ
ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभुः।
व्यवस्थायाश्चैषान्ननु वरद साविष्कृतिवशा-
द्भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः॥'

इति श्लोकेन सङ्गृहीतः।

'षाड्गुण्याद्वासुदेवः पर इति भगवान् मुक्तभोग्यो बलाढ्यात्
बोधात्सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात्।
प्रद्युम्नस्सर्गधर्मौ नयसि च भगवान् शक्तितेजोऽनिरुद्धः
बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूहरङ्गाधिराज॥'

इति [illegible] । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपो व्यूहं उत्तरोत्तर पूर्व[illegible]कारणकः। तत्र वासुदेवे ज्ञानादिगुणाष्षडप्याविर्भूताः। सङ्कर्षणादिषु त्रिषु शास्त्रप्रवर्तनसंहाराद्यौपयिकगुणद्वन्द्वत्रयोन्मेषः सतामपीतरेषां गुणानामनाविष्कारः।

श्लो॥ 'तत्र ज्ञानबलाद्विद्वान् रूपं सङ्कर्षणं हरेः।
शास्त्रप्रवर्तनञ्चापि संहारञ्चैव देहिनाम्॥
बलेन हरते लोकं स्वगुणेन तथा मुने।

ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम् ॥
बलज्ञाने गुणौ तस्य स्फुटौ कार्यवशान्मुने ॥'

इति सङ्कर्षणस्य।

श्लो॥ 'ऐश्वर्यवीर्यसम्भेदाद्रूप प्राद्युम्नमुच्यते।
गुणावैश्वर्यवीर्याख्यौ स्फुटौ तस्य विशेषतः॥
ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम्।
वीर्येण सर्वकर्माणि प्रवर्तयति सर्वशः॥'

इति प्रद्युम्नस्य।

शक्तितस्तेजस्समुत्कर्षादनिरुद्धतनुर्हरेः।
शक्तितेजौ गुणौ तस्य स्फुटौ कार्यवशान्मुनेः॥
शक्त्या जगदिदं सर्वं सब्रह्माण्डन्निरन्तरम्।
बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम् ॥
तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने।

इत्यनिरुद्धस्य च गुणकार्यप्रकारोऽनुसन्धेयः।

ननु वासुदेवसङ्कर्षणादिव्यूहावतार इत्युक्तं तन्न सम्भवति। वासुदेवात् सङ्कर्षणो नाम जीवो जायते। सङ्कर्षणात् प्रद्युम्नसंज्ञकं मनो जायते। तन्मनसोऽनिरुद्धाख्योऽहङ्कारो जायते इति पाञ्चरात्रे उक्तत्वादिति चेन्नैवम्। अत्र हि जीवमनोऽ

हङ्कारशब्दाः जीवमनोऽहङ्काराभिमानिरूपान् सङ्कर्षणप्रद्युम्नानिरुद्धनामकान् भगवद्व्यूहभेदानेव कथयन्ति। तेषां तु जननं प्रादुर्भाव एव। अतो न विरोधः। न च जीवादिशब्दैस्सङ्कर्षणादीनां व्यत्ययो नाभिधानमपि स्यादिति वाच्यम्। सङ्कर्षणो जीवमेवाभिमनुते। प्रद्युम्नो मनस्तत्वमेवानिरुद्धोऽहङ्कारमेवाभिमनुते इति नियमात्। एषाञ्च प्रत्येकमवान्तरावताराः अनन्ताः श्रीपाञ्चरात्रादिषु वेदितव्याः। मत्स्यादयो विभवभेदाः। स्वयं व्यक्तदैवार्षादयस्त्वर्चावतारभेदा। दैवादिष्वपि विशिष्टप्रतिष्ठानन्तरं प्रसादोन्मुखेश्वरसङ्कल्पाधीनमप्राकृतत्वमनुसन्धेयम्। प्राकृताप्राकृतसंसर्गोऽपि नानुपपन्नः। अन्यथा प्राकृतलोकेषु भगवदवताराः परमपदेऽर्चिरादिमार्गेण सूक्ष्मशरीरकस्य वैदिकपुत्रादेर्वा गमनं कथं घटेरन्। सर्वप्रपञ्चव्यापिभगवद्विग्रहातिरिक्तहृदयपद्मकर्णिकामध्यवर्तिसूक्ष्मरूप्यन्तर्याम्यवतारः। दिव्यात्मस्वरूपस्येव विग्रहस्यापि विचित्रव्याप्तिशक्तिस्तयैव धर्मिग्राहकसिद्धया विपरीततर्काणां प्रतिक्षेपः। श्रीमद्गीतायामेकादशाध्याये विग्रहस्य व्यापकत्वादिकं व्यक्तमेव भाष्यकारैः प्रतिपादितम्।

श्लो॥ 'इहैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा॥'

इत्यत्र पृथिव्यन्तरिक्षस्वर्गपातालवितलसुतलादिभोगोपकरण भोग-

स्थानभिन्नं प्रकृतिपुरुषात्मकं कृत्स्नं जगत् इहैकस्थमेतद्विग्रहै-कदेशस्थमित्युक्तम्। तथा

श्लो॥ 'सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥'

इति ममेदं सर्वप्रशासने च सर्वाश्रयं सर्वकारणभूतं रूपं यद्दृष्ट-वानसि तत्सुदुर्दर्शं न केनापि द्रष्टुं शक्यमित्याद्युक्तम्। तथाच शुद्धसत्वस्याधःप्रदेशपरिच्छेदकथनमेतद्विग्रहविशेषव्यतिरिक्तविषयं द्रष्टव्यम्। भगवता पराशरेणाप्युक्तम्—

श्लो॥ 'समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्'।

इति सर्वेष्वेतेषु भगवद्विग्रहेषु सांसारिकफलप्रदान एव शैघ्र्य-मान्द्यादितारतम्यम्। निश्श्रेयसफलन्तु व्यापकानुसन्धायिनां सर्वत्र हस्तापचेयम्। यच्च विभवार्चनाद्व्यूहं प्राप्येति।

श्लो॥ यच्चार्चोपासनक्षीणे कलुषेऽधिकृतो भवेत्।
विभवोपासने पश्चात् व्यूहोपास्तौ ततः परम्।
तत्सूक्ष्मे तनुशक्तस्स्यादन्तर्यामिणमीक्षितुम॥

इत्यादि प्रमाणं तद्व्यापकानुसंधानविधुराधिकारि विशेषविषय-मिति मन्तव्यम्।

इति नित्यविभूतिपरिच्छेदः।

शुभमस्तु

# उदाहृतपुस्तकसूची

| | |
|---|---|
| अधिकरणसारावलिः | वेदान्तदेशिकः |
| आनंददायिनी | नरसिंहराजः |
| ईशावास्योपनिषत् | |
| उपनिषद्भाष्यम् | रङ्गरामानुजः |
| ऐतरेयोपनिषत् | |
| गीताभाष्यम् | रामानुजाचार्याः |
| छन्दोग्योपनिषत् | |
| तत्त्वमुक्ताकलापः | वेदान्तदेशिकः |
| तत्त्वसारः | वात्स्यवरदाचार्याः |
| तैत्तिरीयोपनिषत् | |
| न्यायसिद्धाञ्जनम् | वेदान्तदेशिकः |
| न्यायपरिशुद्धिः | वेदान्तदेशिकः |
| नित्यानुष्ठानदीपिका | श्रीकृष्णसूरिः |
| पुरुषसूक्तम् | |
| बृहदारण्यकोपनिषत् | |
| भगवद्गीता | |
| मनुस्मृतिः | मनुः |
| महाभारतम् | वेदव्यासः |
| मानयाथात्म्यनिर्णयः | वरदविष्णुमिश्राः |
| मोक्षधर्मः | वेदव्यासः |

| | |
|---|---|
| विष्णुपुराणम् | पराशरः |
| वेदार्थसंग्रहः | रामानुजाचार्याः |
| वेदान्तसारः | रामानुजाचार्याः |
| श्वेताश्वतरोपनिषत् | |
| शतदूषणी | वेदान्तदेशिकः |
| शिल्पशास्त्रम् | |
| श्रीगुणरत्नकोशः | पराशरभट्टः |
| श्री भाष्यम् | रामानुजाचार्याः |
| श्रुतप्रकाशिका | सुदर्शनसूरिः |
| सङ्गतिमाला | विष्णुचित्ताचार्याः |
| सर्वार्थसिद्धिः | वाधूलश्रीनिवासाचार्याः |
| सारसञ्जीविनी | श्रीकृष्णसूरिः |
| सिद्धित्रयम् | यामुनाचार्याः |

